महामहोपाध्याय-

# पण्डित-श्रीदुर्गाप्रसादः ।



| जन्म । | मृत्युः । |
|---|---|
| ई० स० १८४६ | ई० स० १८९२ |

# PRASÂDAS'ATAKA

OR

## THE LIFE OF MAHÂMAHOPÂDHYÂYA PANDIT DURGÂPRASÂD

LATE EDITOR OF "KÂVYAMÂLÂ."

BY

PANDIT DURGÂPRASÂD DVIVEDÎ.

EDITED

BY

KÂS'ÎNÂTH PÂNDURANG PARAB

(EDITOR OF "KÂVYAMÂLÂ")

AND

PRINTED AND PUBLISHED

BY

THE PROPRIETOR

OF

JAVAJI DADAJI'S "NIRNAYA-SAGARA" PRESS.

BOMBAY.

1892.

# प्रसादशतकम्




नाम

## महामहोपाध्याय-पण्डित-श्रीदुर्गाप्रसादानां

जीवनचरितम् ।

---

जयपुरमहाराजाश्रितेन पण्डितसरयूप्रसादतनयेन
द्विवेदोपाख्येन पण्डितदुर्गाप्रसादेन
विरचितम् ।

---

साधुर्जनः पश्यतु काव्यमेतदित्यर्थयामो जगदीश तुभ्यम् ।
कदापि मास्मिन्पततु प्रचण्डा शनैश्चरस्येव खलस्य दृष्टिः ॥

---

एतत्
परबोपाह्वेन पाण्डुरङ्गतनूभुवा काशीनाथशर्मणा
संशोध्य
मुम्बापुर्यां निर्णयसागराख्ययन्त्रालये तदधिपतिद्वारा
मुद्रायितम् ।

# उपोद्घातः ।

---

**श्रीगणेशाय नमः ।**

सततनिगमाभ्यासोल्लासप्रकामसमीकृते
  वपति महतां चेतःक्षेत्रे विवेकजलोक्षिते ।
य उपचरितः संविद्बीजं यथेष्टफलोदयं
  स भुवनवनीमालाकारः शिवाय शिवोऽस्तु वः ॥

(अयं मम दशकण्ठवधस्य ।)

प्रथमो गुरुः—

निःसीमसौजन्यसुधासमुद्रा दुर्गाप्रसादाः सुधियो जयन्ति ।
येषां प्रयासेन जडत्वपात्रमहो अहं चाप्यभवं मनुष्यः ॥

द्वितीयः—

पञ्चाभिर्नृपवन्दितो द्विजपतिः पुंरूपवाग्देवता
  विद्वत्कैरवचन्द्रमा विजयते श्रीबापुदेवः कृती ।
ज्योतिःशास्त्रमनन्तयुक्तिविततं स्कन्धत्रयाधिष्ठितं
  चैतन्यं जगतेव वासरमणेर्यस्मादवाप्तं मया ॥

तृतीयः—

येष्वध्यापनतत्परेषु धिषणप्रागल्भ्यलक्ष्मीकृप-
  श्चित्रं चित्रमहो भवन्ति गुरवोऽनन्ता अनन्तातले ।
ते दाक्षीसुतशासनाब्धिलहरीसाम्राज्यमभ्रान्तराः
  श्रीमद्रामभजाश्वकाशतितमां पट्शास्त्रबीजाङ्कुराः ॥

अहह विचित्रं खलु पारमेश्वरं गतिविलसितम्, यत्र निपुणं निरूपितेऽपि फलभेदा-नुभूयते, न तावद्व्यापारकणिकापि ।

हा हन्त विलक्षणः किल शोकशिखी, योऽन्तः प्रविश्य प्रतिक्षणं समेधमानोऽवि-लम्बितमेव निर्वृतिदानदीक्षितां तत्रत्यां शिशिरतामाहृत्य लोचनयुगलसमुद्गतसलि-लासारसंनिपातकैतवेन तां यथा विकासयति यासु क्षणमपि स्मितराजहंसैर्नासितुं पार्यते ।

अहो हृदयान्तरान्नापसरन्ति ते दुर्वृत्तविपाकविलासा येषु मानसं शतधा स्फुटदिव, शरीरं स्रंसमानमिव, दुस्तरे तिमिरपयोनिधावन्तराला मज्जमान इव क्वापि विश्रमं न लभते ।

ही एके ते वासराः, येषु च त्यज्यतामालस्यम्, मुच्यतां शयनीयम्, अनुष्ठीयतां प्राभातिकम्, परिशील्यतां शास्त्रम्, विधीयतां भोजनम्, पीयतां पानीयम्, अति-क्रामति वेला गम्यतां बहिः, संक्षिप्यतां कर्म, परिधीयतां वसनम्, गृह्यतां यष्टिः, अ-वलोक्यतामेतत्, श्रान्तोऽसि चेद्विश्रम्यतामिह, प्रत्यासीदति समयः आधीयतां म-तिरेवंप्रायाः प्रणयपेशलाः सूक्तयो व्यजृम्भन्त ।

हा धिक्, एके त्वमी वासराः, येषु न तादृशसूक्तिचन्द्रिकालोकवैकल्येन [illegible]-मानसानन्दचकोरक[illegible] जगदेतदिदं मन्ये ।

आः कष्टोऽयं संसारः । संप्रति तदिदिवृत्तं स्मारंस्मारं **केदारा**दिकं दर्शं दर्शं च लम्भृतापि चलमाना मामकी तनुरिव न प्रभवति लेखनी । अश्रुविन्दुभिः सह प्रन्ततः स्फारीभवन्ति कलमाग्रमषीपाताः । पदन्यासः समूलमुन्मूलयतीव हृदयम् । तासीति तदुक्तिः सपत्राकरोतीव प्रतीकान् । भवन्ति चात्र श्लोकाः—

धारावन्धमनी पतन्ति सततं दृग्भ्यां पयोविन्दवः
कीलालीढमिवान्तरं स्फुटति हा गात्रं मुहुः सीदति ।
जायन्ते पुरतस्तमांसि धिषणा वैकल्यमालम्बते
हित्वास्मान्क्व गतोऽसि शीघ्रमहहा प्रत्युत्तरं दीयताम् ॥
ब्राह्मीविभ्रमरङ्गभूपरिसरे रत्नप्रदीपायिते
निर्वाणत्वमुपागते कृतिरवौ **दुर्गाप्रसाद** त्वयि ।
खद्योतैः स्फुरितं तमोभिरुदितं घूकैः समुज्जृम्भितं
सचक्रैः परितो निमीलितमहो हा हन्त किं नाभवत् ॥
हा हा नूतनकल्पनाकुमुदिनीराकातुपारद्युते
तत्तद्ग्रन्थसहस्रशाणपटलीशाणायितज्ञप्तिभूः ।
किं कुर्मः क्व च याम आः कमिह हा तांस्तांश्च गूढाशया-
न्पृच्छामोऽहह हाधुनास्ति भुवने कस्त्वादृशो मार्मिकः ॥

विलक्षणा हि तत्सौहार्दपरिपाटी, या कल्पशतेनापि सूचयितुं न शक्यते किं पुनर्वर्णयितुम् ।

**जयपुरा**गमनानन्तरं तस्य महात्मनः सर्वेषामस्माकं चैकस्मिन्नेव निकेतने चिरमवस्थानमासीत् । कालान्तरे संजातविप्रकर्षेऽपि तादृशमहो नाभवद्यत्र तस्य सर्वेषामस्माकं च समागमो नाजनि । किंबहुना—गुराविव मम तातपादे तन्मान्यताग्रहोऽभूत् । शैशवे प्रथमं तत एव मया साहित्यादि परिशीलितम् । एवं तस्य सर्वेषामस्माकं च प्रत्यहमुपचीयमानप्रेमवन्धमांसलो व्यतिकर आसीत् ।

हा धिक् तत्सकलमद्य गन्धर्वनगरमिव गगनकुसुममिव स्वप्नावलोकितमिव मिथ्याभूतमजनिष्ट ।

तस्य हिमकरकरनिकरकरम्बितकुमुदकाननोद्दामसौभाग्यद्वैराज्यसन्नादरयशोराशिनासीरकरण्डीकृतब्रह्माण्डविवरस्य विद्याशास्त्रकलाकलापकलनाश्रमश्रान्तस्येव दीर्घनिद्राजुषो लब्धमहामहोपाध्यायपदवीकस्यासीमगुणपयोधिकणिकासूचकमदः **प्रसादशतकं** विरचय्य, **मुम्बापुर**वास्तव्याय निजसुहृत्तमाय **परबो**पाह्वाय **पाण्डुरङ्ग**तनूभुवे श्रीमत्**काशीनाथ**शर्मणे समर्पितम् । तेनाथ **जावजी**श्रेष्ठिनस्तनयेन **तुकाराम**श्रेष्ठिना च **निर्णयसागर**नाम्नि यन्त्रालये तन्मुद्रापितमिति शिवम् ॥

---

१. क्रियाविशेषणम्. २. 'दीर्घान्तमपीदम्' इति मुकुटः. ३. नासीरं कर्पूरम्.

॥ श्रीः ॥

# [1]प्रसादशतकम् ।



अस्ति प्रशस्ते [2]प्रतिलोकशस्ते ढुण्ढारदेशेऽलवरप्रदेशे ।
[3]अखण्डतत्तज्जनसौख्यसख्यो ग्रामो गरीयान्हमजापुराख्यः ॥ १ ॥

अमन्दसौगन्ध्यतरङ्गिताभिर्मरन्दसंदोहकरम्बिताभिः ।
पतत्प्रसूनावलिबन्धुराभिर्यो भूष्यते कुञ्जपरम्पराभिः ॥ २ ॥

[4]कुजातिरम्योऽपि सुजातिशाली [5]गोत्रानिवेशोऽप्यमृताशयाढ्यः ।
यः [6]पाटलाभोऽप्युपशल्यरूढद्रुमप्रभाश्यामलितश्चकास्ति ॥ ३ ॥

जागर्ति यत्र प्रणतार्तिहारी स शंकरो नार्मदलिङ्गधारी ।
यः शेखरीभूतशशिच्छलेन दुर्गाप्रसादस्य यशो बिभर्ति ॥ ४ ॥

चौरासियागौडकुलप्रसूतिर्दिगन्तरव्याप्तयशोविभूतिः ।
अनन्यसाधारणधर्मकर्मा बभूव तत्र ब्रजलालशर्मा ॥ ५ ॥

य एकतानो नियतात्मवृत्तिर्विधान[7]कृष्टिः परमैकदृष्टिः ।
चचार जालंधरपीठमध्ये तपांसि लोकोत्तरशक्तिभांसि ॥ ६ ॥

यो दैववेदी लवपत्तनान्तः काराजुपं तं च गुलाबसिंहम् ।
सत्यं वदाम्यङ्ग जहातु खेदं भवान्नृपालो भवितेत्यवादीत् ॥ ७ ॥

---

१. 'विनापि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वाच्यः' इत्यनेन 'देवदत्तः । दत्तः । सत्यभामा । भामा ।' इत्यादिप्रयोगवदिह दुर्गापदलोपो द्रष्टव्यः । तथा च 'दुर्गाप्रसादशतकम्' इति फलितोऽर्थः । स्पष्टोऽयमर्थो व्याकरणमहाभाष्यस्य पस्पशाह्निके 'सिद्धे शब्दार्थसंबन्धे' इति वार्तिकव्याख्याने । तेन 'प्रसादस्तु प्रसन्नता' इति कोषलभ्योऽर्थो निरस्तः । २. अव्ययीभावगर्भितस्तत्पुरुषः । ३. अखण्डमविच्छिन्नं तत्तज्जनानां सौख्यं सख्यं च यस्मात् । सुखमेव सौख्यम्, स्वार्थे ष्यञ् । ४ कुजातिः सुजातिर्न भवतीति विरोधः । कोः पृथिव्या जाताः कुजा वृक्षाः, 'पञ्चम्यामजातौ' इति डः । तैरत्यन्तं मनोहरः । सुजातयो ब्राह्मणादयः, तैः शालत इति तत्परिहारः । ५. यो हि भूमौ तिष्ठति स नाकस्थामृताश्रयो न भवतीति विरोधः । गोत्राणामा समन्तान्निवेशो यस्मिन् । गोत्रा भूः, गोत्रोऽद्रिः । यद्वा गवां समूहो गोत्रा । 'इनित्रकट्यचश्च' इति त्रः । अमृतं जलम् इति तत्परिहारः । ६. श्वेतरक्तः श्यामो न भवति । पक्षे पाटलैर्व्रीहिभिराभातीति पाटलाभः । कः । ७. कृष्टिः पण्डितः ।

ततश्च जम्बूनगरे नृसिंहे नृपत्वमायाति गुलाबसिंहे ।
सासादिता येन विदा प्रतिष्ठा याख्याप्यतेऽद्यापि तदीयकीर्त्या ॥ ८ ॥
या शोभते श्रीनगरीन्दिरेव विश्वंभरालंकरणैकहेतुः ।
तस्यां वितस्तातटशालि येन सौधं यशःकूटमिव व्यधायि ॥ ९ ॥
समस्तसिद्धान्तरहस्यवेदी प्रश्नक्रियाद्वारकवाटभेदी ।
स संपदो ब्राह्मणसाच्चकार किं चार्तपालीविपदो जहार ॥ १० ॥

तस्मादभूदतिविसृत्वरकीर्तिवल्ली-
पुष्पप्रतानसुरभीकृतरोदसीकः ।
उच्चावचागमविचारविशेषशोभी
दुर्गाप्रसाद इति पण्डितमौलिरत्नम् ॥ ११ ॥
उद्द्योतते दिवस एव मरीचिमाली
नक्तं चकास्त्यहह कैरविणीविलासी ।
रात्रिंदिवं ज्वलति यस्य विजृम्भमाण-
पीयूषसिन्धुलहरीललिता गुणश्रीः ॥ १२ ॥
के सन्ति भूमिवलये हृदयालवोऽत्र
ये तद्गुणामलरसायनसेवनेन ।
उद्भूतपाटवपरिष्कृतशेमुषीका
व्युत्पत्तिवारवनितां न परिष्वजन्ते ॥ १३ ॥
मालामिवोज्ज्वलगुणावलिराजमाना-
मामोदवीचिवलितां सुमनोभिरामाम् ।
यस्याद्भुतां सरससूक्तिमुदीर्णरागं
के के न बिभ्रतितरां शिरसा रसज्ञाः ॥ १४ ॥
आदित्यभूपरिगता सुरनिम्नगेयं
यस्य प्रभावकलयानुगृहं विभाति ।

---

१. विश्वंभरो विष्णुः, विश्वंभरा भूः । २. सौधोऽस्त्री । ३. कूटं राशिः । ४. कृयोगे 'देये त्रा च' इति चकारानुकृष्टः सातिः । ५. 'नद्यृतश्च' इति कप् । ६. रात्रौ च दिवा च रात्रिंदिवम्, 'अचतुर–' इति साधुः । ७. 'हृदयाचालुरन्यतरस्याम्' इत्यालुः । ८. नद्यन्तत्वात्कप् । ९ माधुर्यादयो गुणाः सूत्राणि च । १०. आमोद आनन्दः सौरभ्यं च । ११. सुमनसो विद्वांसः कुसुमानि च । १२. काव्यमालादिपुस्तकानां शुक्लकृष्णवर्णं लक्ष्यीकृत्य रूपकातिशयोक्तिरियम् ।

यत्रारचय्य कतिचित्कृतिनोऽवगाहं
  मालिन्यपातनकृते प्रगुणीभवन्ति ॥ १५ ॥

चित्रं स कश्चिदिह चित्रशिखण्डिडिम्भो[1]
  विद्योतमानगुणडम्बरडिण्डिमश्रि ।
यत्सूक्तिविभ्रमसुधारसपानकेलि-[2]
  सौहित्यतुन्दिलतयेव गुरुत्वमाप ॥ १६ ॥

यत्कीर्तिरुष्णविषयेषु[3] चिरं विहृत्य
  तद्भासजातपरितापजिहीर्षयेव ।
आविर्भवद्बहलशीतनिरन्तरेषु
  यूरोपभूपरिसरेषु वरीवृतीति ॥ १७ ॥

सर्वोपसर्गरहितौ[4] सममुन्मिषन्तौ
  मुक्ताप्रवाललतिकास्तवकायमानौ ।
यस्याद्भुतौ शशिरवी इव मध्यवृत्ती
  केषां मुदे विलसतो न यशःप्रतापौ ॥ १८ ॥

दिक्कामिनीवदनपङ्कजकोरकेषु
  कर्पूरकुङ्कुमविलेपमिवार्पयन्तौ ।
शीतोष्णखेदहृतये जगतः किमेता-
  वेकीबभूवतुरमुष्य यशःप्रतापौ ॥ १९ ॥

एकेन[5] शीतमपरेण च ताप एव
  हा हन्त नौ[6] जनिरियं जनपीडनाय ।
इत्याकलय्य गिरिशाविव[7] यस्य नूनं
  कीर्तिप्रतापरसिकौ मिलितावभूताम् ॥ २० ॥

---

१. चित्रशिखण्डिनोऽङ्गिरसो डिम्भो बालकः। २. यदीयसूक्तामृतपानात्मेव गुरुत्वसंबन्धेऽपि तदसंबन्धोक्तेरतिशयोक्तिः, सा चोत्प्रेक्षया संकीर्यते । तया च [illegible] गुर्वतिशायिनी विद्यासमृद्धिर्वस्तु व्यज्यते । ३. मध्यदेशेषु । ४. उष्णर्तौ [illegible] । ५. सामान्ये नपुंसकम् । ६. आवयोः । ७. गिरिशा च गिरिशश्च गिरिशौ । 'पुमान्स्त्रिया' इत्येकशेषः ।

[1]त्रैलोक्याभरणायमानसुगुणग्रामस्य यस्याधुना
पर्याप्तौ जगतः शिवाय सुतरां कीर्तिप्रतापावतः ।
हा वीप्सा जनितैतयोरिति यदा मीमांस्यते ब्रह्मणा
चन्द्रोऽर्कोऽपि तमच्छलोल्बणमपीकूर्चैस्तदा लिप्यते ॥ २१ ॥

चन्द्रोऽधारि विसारिरश्मिविसरो गङ्गा तरङ्गाकुला
शेषः कञ्चुकभूषितः सिततमं भस्मापि भाभूतये ।
नैवावापि तथापि यस्य यशसां सादृश्यलक्ष्मीरिति
क्ष्वेडः कोपकषायितेन गिरिजाजीवातुनाभक्षि किम् ॥ २२ ॥

[2]कैलासन्तकि तारकन्तकि दलन्मल्लीकलापन्तकि
[3]व्याधामायुधकुञ्जरन्तकि [4]जटाटीराट्टहासन्तकि ।
उद्यत्कुन्दकदम्बकन्तकि वलत्पीयूषपूरन्तकि
श्वेताब्जन्तकि यस्य [5]कीर्तिकणिका ब्रह्माण्डभाण्डोदरे ॥ २३ ॥

राकानायककामनीयककलाव्याघूर्णमानामल-
क्षीराम्भोधितरङ्गताण्डवरमासौभाग्यसर्वंकषे ।
यत्कीर्तिप्रसरे विधूततिमिरे व्याप्तत्रिलोकान्तरे
हंहो काकपिकादयोऽपि सहसा हंसावतंसन्तकि ॥ २४ ॥

भ्राम्यत्सान्द्रसुधासमुद्रलहरीश्रीगर्वनिर्वासिका-
मन्तर्वाणिमणेरमुष्य यशसां लक्ष्मीं कथं ब्रूमहे ।
यन्मात्सर्यवशादसावनुशयज्वालावलीवेल्लितः
प्रालेयद्युतिरात्मनो मलिनतामद्यापि नैवोज्झति ॥ २५ ॥

स्मारंस्मारमसीमगौरवजुषो यस्यावदानोत्करा-
न्वारंवारममी भवन्ति सुधियो वाचंयमत्वे दृढाः ।
मन्दस्यापि ममात्र तान्निगदतो नोज्जृम्भते यत्त्रपा
तन्नूनं समुदेति सांप्रतमहो धार्ष्ट्यस्य विस्फूर्जितम् ॥ २६ ॥

---

१. 'तदोजसः–' इत्यस्य भङ्ग्यन्तरमेतत् । २. 'सर्वप्रातिपदिकेभ्यः–' इत्यादिना क्विपि 'कैलासन्ति' इति जाते ततः 'अव्ययसर्वनाम्नामकच्प्राक्टेः' इत्यत्र मण्डूकप्लुत्या 'तिङश्च' इत्यनुवर्तनादकचि 'कैलासन्तकि' इत्यादि सिध्यति । ३. व्याधाम वज्रम् । ४. जटाटीरः शिवः । ५. कीर्तिपरमाणवः ।

दुर्वर्णोद्गमभास्वरापि परितो दीव्यत्सुवर्णाश्रया
जम्बूद्वीपपृथुकर्णिकेव रुचिरा जागर्ति जम्बूपुरी ।
तत्राष्टाङ्गतुरङ्गभू(१७६८)मितशकस्योर्जे सिताद्यातिथौ
चन्द्रे यस्य महात्मनोऽजनि जनिर्भूतानुकम्पोदया ॥ २७ ॥

तातस्याथ गुलाबसिंहजनुषो जम्बूमहीमण्डल-
स्वाराजो रणवीरसिंहकृतिनः शिक्षाविशेषेण यः ।
अह्नायैव हिताहितव्यवहृतौ तत्तत्प्रमेयांशके
सारासारविचारमार्मिकतया चाणक्यचर्योऽभवत् ॥ २८ ॥

कर्पूरादपि पारदादपि सुधाडिण्डीरपिण्डादपि
प्रालेयादपि मौक्तिकादपि शरत्पूर्णेन्दुबिम्बादपि ।
फुल्लत्कैरवकाननादपि वलद्गङ्गातरङ्गादपि
क्षुभ्यत्क्षीरमहार्णवादपि सिते तेजस्यभूद्यन्मतिः ॥ २९ ॥

प्रत्यग्रस्तनयित्नुमञ्जिमहरं तापिच्छगुच्छच्छवि
व्याकोशासितसारसालिसुषमाद्वैराज्यसज्जस्पृहम् ।
यत्कृष्णात्मकमप्यपारतिमिरप्राग्भारमुन्मूल्य-
न्नित्यं भक्तहृदम्बुजेऽर्कतितरां तत्रांसि यस्यास्थया ॥ ३० ॥

आरामादिव विविधागमाभिरामारुद्धोपद्विजपटलीविराजमानात् ।
सामोदात्कृतिपुरुहूतसोमनाथाद्येनोद्यत्प्रमदमलम्भि सौमनस्यम् ॥३१॥

आहूतान्नरपतिना पिनाकपुर्यां विस्फूर्जद्बहुधनमानदानवृष्टि ।
दुर्ज्योतिश्चणकुलकालियाहिकृष्णाद्योऽध्यैष्ट ग्रहगणितानि दैवकृष्णात् ३२

---

१–२. दुर्वर्णा सुवर्णा न भवतीति विरोधः । दुर्वर्णानां रजतानामुद्गमेन देदीप्यमाना, दीव्यतां सुवर्णानां कनकानामाधारभूतेति विरोधपरिहारः । ३. स्वाराट् शक्रः । ४. डि-ण्डीरपिण्डः फेनपुञ्जः । ५. 'आसि' इति आसधातोर्भावे रूपम् । ६. आगमः, अगमः इति च्छेदः । ७. द्विजा ब्राह्मणाः, पक्षिणश्च । ८. पण्डितेन्द्रः, स चासौ सोमनाथश्चेति कर्मधारयः । ९. सौमनस्यं पाण्डित्यं संतुष्टमानसत्वं च । १०. ज्योतिःशब्दस्तारकादिबोधके शास्त्रे भाक्तः, अत एव 'ज्योतिषमधीते वेद वा' इति व्युत्पत्त्या ज्योतिषिकशब्दस्य नि-ष्पत्तिः, तथा च ज्योतिषा वित्ता ज्योतिश्चणाः । चञ्चुप् । दुष्टा ये ज्योतिषिकास्तेषां कुलमेव कालियाहिस्तत्र कृष्ण इति तात्पर्यम् ।

यो विद्वानपि रणवीरसिंहभूभृद्विज्ञप्तस्तदचरमेण [1]नन्दनेन ।
प्राज्ञेभ्यः सविनयमिङ्गिशादिविद्यां संसारव्यवहृतिसिद्धयेऽध्यगीष्ट ॥ ३३ ॥
क्रीडायां सकलकलाग्रहप्रसङ्गे मीमांसावलयिनि मन्त्रविस्तरेऽपि ।
अन्योन्यप्रणयसुधावगाहसान्द्रं सौहार्दं नृपतनयस्य तस्य चासीत् ॥ ३४ ॥
सौशील्यप्रभृतिगुणावलीमहिम्ना या व्रीडाविषयमरुन्धतीमनैषुः ।
ता मातृरिव रणवीरसिंहराज्ञीः श्रीभर्तुर्यजनविधीनवेदयद्यः ॥ ३५ ॥
यस्ताते सुरपुरपौरतां प्रयाते तद्भूयस्तरविरहावसन्नचेताः ।
निर्विण्णः कथमपि तत्र तत्र जम्बूपर्यन्ते समयमयापयच्चिराय ॥ ३६ ॥
यो धीमान्पितृवदवाप्तराज्यकार्यः सौजन्यामृतशिशिरीकृता[2]र्यसार्थः ।
शिश्राय श्रुतनयवीर्यजागरूकव्यापारं नृपरणवीरसिंहदेवम् ॥ ३७ ॥
उन्मीलद्घु[3]सृणक[4]रालकेसरालीसौरभ्यप्रसरतरङ्गपूर्यमाणान् ।
कश्मीरानसकृदियाय लोकदर्शी यो जम्बूनगरपुरंदरेण साकम् ॥ ३८ ॥
[5]कश्मीरासु च कवितालतामतल्लीपुष्पर्द्धिप्रकरजिघृक्षयेव बाढम् ।
यः प्राज्ञो व्यहरत भाविकाव्यमालागुम्फाय प्रतिदिननूतनोत्सवश्रीः॥३९॥
वैतस्तप्रचुरतरङ्गबन्धुरायां श्रीपुर्यां [6]शिवनिगमावगाहपूर्वम् ।
यो दीक्षामभिनवगुप्तपादकुल्यादाचार्यान्मतिकलिकामिवाग्रहीष्ट ॥ ४० ॥

अथ कालकरालयन्त्रणादहहामुष्य वधूर्दिवं ययौ ।
अनुजोऽप्यगमत्ततः परं सहसास्या हि गवेषणाय किम् ॥ ४१ ॥
इति घोरविपत्तिसागरान्तरमज्जत्प्रतिभस्य यस्य हा ।
शतपत्रदलेऽम्बुबिन्दुवन्नहि जम्बूनगरे मनोऽसजत् ॥ ४२ ॥
प्रथयन्निव सोऽद्वितीयतां सहसैकाकितया महाशयः ।
क्षितिवल्लभशिष्टि[7]मन्तरामरनाथस्य दिदृक्षयाव्रजत् ॥ ४३ ॥
अथ [8]कल्पविधानवर्त्मना विविधांस्तीर्थगणान्सभाजयन् ।
तुहिनाचलकंदरागतं करुणाशालि [9]महो व्यलोकयत् ॥ ४४ ॥

---

१. इदानींतनेन महाराजश्रीप्रतापसिंहेन । २. सज्जनवर्गः । ३. घुसृणं कुङ्कुमम् । ४. करालो रमणीयः । ५. कश्मीराशब्दः स्त्रीलिङ्ग इति सांप्रदायिकाः । ६. शिवनिगमः प्रत्यभिज्ञादर्शनम् । ७. शिष्टिराज्ञा । ८. भृङ्गीशसंहितानुसारिण्या सरण्या । ९. रसमयं लिङ्गम् ।

[1]भवमौलिसुधांशुपीडनोद्भवपीयूषरसप्रवर्तिता ।
परिराजति यत्र संततं सुखसंतानवहामरावती ॥ ४५ ॥
द्विजराजकलाक्रमेण यो हरभूमोदयतेऽथ लीयते ।
तमनूनकिल्बिषा[3]मरं सुकृती पूजयति स सादरम् ॥ ४६ ॥
रसयन्नमरावतीपयः कलयन्सान्द्रसुधामयं महः ।
दिवसत्रयमत्यवाहयत्सुमनास्तत्र [4]कपोतसाक्षिकम् ॥ ४७ ॥
विनिवृत्य ततो महायशाः शनकैर्जन्[5]मवसुंधरामगात् ।
अथ तत्र दिनानि कानिचिद्गमयामास सुहृत्तमैः सह ॥ ४८ ॥
स बुधोऽभिजनावलोकनो[6]पधिनासादितराजशासनः ।
सपरिच्छद एव कौतुकादथ जम्बूनगराद्विनिर्ययौ ॥ ४९ ॥
स वदान्यवरः स लोकते पथि [7]जालंधरपीठदेवताम् ।
अथ तां जनकापचायितां विकसत्सूक्तिसुम[8]र्द्धि तुष्टुवे ॥ ५० ॥
जय जगदम्ब कदम्बविहारिणि मङ्गलकारिणि कामकले
जय तनुशोभाकम्पितशं[9]म्पे लसदनुकम्पे कान्तिनिधे ।
जय जितकामेऽपि जनितकामे [10]शंकरवामे [11]वामगते
जय जालंधरपीठविलासिनि दुःखविनाशिनि भक्तिवशे ॥ ५१ ॥
नानालंकृतिझंकृतिशालिनि मौक्तिकमालिनि केलिपरे
मुनिजनहृदयागारनिवासिनि विद्यास्वामिनि बोधघने ।
सान्द्रानन्दसुधारसभासिनि वीणावादिनि वेदनुते
जय जालंधरपीठविलासिनि दुःखविनाशिनि भक्तिवशे ॥ ५२ ॥
आपत्तूलमहानलकीले मञ्जुललीले भूतिखने
द्युतिजितचम्पकदामकलापे मधुरालापे हंसगते ।

---

१. 'गृहीत्वा शिरसस्तत्र हरश्चन्द्रकलां स्वयम् । संपीड्य देवानवदन्मृतमुत्तमम् ॥ पीडनाया निःसृता च धारा परमिका प्रिये । सैव भूता नदी पुण्या नाम्ना चैवामरावती ॥' इति पौराणिकी चर्चानुसंधेया । २. 'अमाप्रभृति पूर्णान्तं कलां गृह्णाति चेश्वरः । ततः प्रोक्तश्च तज्ज्ञैर्भगवानमरेश्वरः ॥' इति वचनात् । ३. अमरो मस्तकः । ४. 'इत्थं काला-स्ततो देवा हरेण परमात्मना । भूत्वा कपोतरूपास्ते तीर्थविस्मयहारिणः ॥' इत्यादिकथानुसंधेया । ५. जम्बूनगरीम् । ६. उपधिर्व्याजः । ७. श्रीवज्रेश्वरीम् । ८. क्रियाविशेषणमेतत् । ९. शम्पा विद्युत् । १०. शिववामे । ११. रमणीयगमने ।

विभ्रमरञ्जितशंकरहृदये कृतजगदुदये शैलसुते
जय जालंधरपीठविलासिनि दुःखविनाशिनि भक्तिवशे ॥ ९३ ॥
मूले दीपककलिकाकारे विद्यासारे भवसि परा
तस्मादपसृतिकलनावृद्धे मणिपुरमध्ये[2] पश्यन्ती ।
स्वान्ते मध्यमभावाकूता कण्ठे वितता वैखरिका
जय जालंधरपीठविलासिनि दुःखविनाशिनि भक्तिवशे ॥ ९४ ॥
पश्चादाविर्भवमनवद्ये श्रेयःपद्ये यत्तददः
शब्दब्रह्मतया खलु गेयं खमिवामेयं किमपि घनम् ।
पञ्चाशल्लिपिभेदविचित्रं वाङ्मयमात्रं त्वमसि परे
जय जालंधरपीठविलासिनि दुःखविनाशिनि भक्तिवशे ॥ ९५ ॥

---

१. अत्रेदं तत्त्वम्—'येयं विमर्शरूपैव परमार्थचमत्कृतिः । सैव सारं पदार्थानां परा वागभिधीयते ॥ नादाख्या सर्वभूतेषु जीवरूपेण संस्थिता । अनादिनिधना सैव सूक्ष्मा वागनपायिनी ॥ अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् । विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥ वैखरी शब्दनिष्पत्तिर्मध्यमा स्मृतिगोचरा । द्योतकार्थस्य पश्यन्ती सूक्ष्मा ब्रह्मैव केवलम् ॥' इत्यादिक्रमेण सर्वत्र सदोदितायाः सूक्ष्मायाः परायाः शब्दब्रह्मणः शक्तेर्बहिरुन्मिषन्त्याः प्रथमो विवर्तः पश्यन्ती नाम । तथा चोक्तम्—'अविभागा तु पश्यन्ती सर्वतः संहृतक्रमा । स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी ॥' इति । अस्यार्थः—अविभागस्थानकरणप्रयत्नप्रकारेण वर्णानां विभागहीना । अत एव संहृतक्रमा तथैवान्तःस्वरूपज्योतिः स्वयंप्रकाशा स्वस्यात्मनो रूपं ज्योतिश्च सर्वत्र हि सर्वविधायिनी शक्तिरेवेति, वान्तः सूक्ष्मबीजादङ्कुरमिव बहिरुन्मिषन्ती किंचिदुच्छूना पराया मध्यमायाश्चावस्थां तटस्था पश्यतीति पश्यन्तीत्युच्यते । ततः परं तु 'अन्तः संकल्परूपा या क्रमरूपानुपातिनी । प्राणवृत्तिमतिक्रम्य मध्यमा वाक्प्रवर्तते ॥' एतत्कथयामीति विमर्शरूपा अन्तःसंकल्परूपा प्राणवृत्तिमतिक्रम्य श्रोत्रग्राह्यवर्णाभिव्यक्तिरहिता क्रमरूपानुपातिनी मानसिकवर्णोच्चारणक्रमेण द्वितीयो विवर्तो मध्यमारूपो जायते । मध्यमा किल द्वयोर्वाग्विवर्तयोः पश्यन्तीवैखरीसंज्ञकयोर्मध्ये वर्तमाना मध्यमेत्युच्यते । तदनन्तरं च, 'स्थानेषु विवृते वायौ कृतवर्णपरिग्रहा । वैखरी वाक्प्रयोक्तॄणां प्राणवृत्तिनिबन्धना ॥' इति लक्षणात्स्थानकरणप्रयत्नक्रमव्यज्यमानः श्रोत्रग्राह्यदुन्दुभिवीणादिनादपरिचयो गद्गदाव्यक्तगकारादिविलाससमुच्चयपदवाक्यात्मकस्तृतीयो विवर्तो वैखरीत्युच्यते । विशिष्टं खमाकाशं मुखरूपं राति गृह्णातीति विखरः प्राणवायुसंचारविशिष्टो वर्णोच्चारस्तेनाभिव्यक्ता वैखरीति ।
२. नाम्नी ।

भवभवविभवपराभवहेतो गिरिकुलकेतो भक्तहिते
नानाविधवृजिनोत्करवारिणि करुणासारिणि शान्ततरे ।
सहसोत्सारितसाधकविघ्ने श्रद्धानिघ्ने[1] सुखकलिके
जय जालंधरपीठविलासिनि दुःखविनाशिनि भक्तिवशे ॥ ५६ ॥

सिन्दूरद्रवचुम्बितभाले सेवितहाले प्रेमभरे
मातश्चिन्तामणिभवनान्ते निर्भरकान्ते[2] विततततम्[3] ।
सोत्कं गायसि किंनरदारैः साकमुदारैः पतिचरितं
जय जालंधरपीठविलासिनि दुःखविनाशिनि भक्तिवशे ॥ ५७ ॥

क्लेशं भञ्जय रञ्जय चित्तं वित्तं स्फारीकुरु वरदे
शत्रुं मर्दय वर्धय शक्तिं भक्तिं सान्द्रीकुरु सरले ।
नास्ति कृपानिधिरम्ब त्वत्तो मत्तो मत्ततमो न शिवे
जय जालंधरपीठविलासिनि दुःखविनाशिनि भक्तिवशे ॥ ५८ ॥

इत्यमन्दसुधाबिन्दुस्यन्दिभिः सूक्तिविभ्रमैः ।
उपश्लोकयति स्मायं तुहिनाचलनन्दिनीम् ॥ ५९ ॥

यत्रासेचमकोद्देशे तेन व्यश्रमि धीमता ।
अश्नीतपिबता[4] तत्र जैजागारतमां[5] क्रिया ॥ ६० ॥

उपायंसत[6] कर्माणि येनाम्नायोऽध्यगाय्यपि[7] ।
विदानांयि[8] निजावासं स कालीदत्तभूसुरः ॥ ६१ ॥

मौञ्जीबन्धगुरोस्तस्मात्कूर्माचलनिवासिनः ।
समयोऽयाप्पयाप्पेर्न शिक्षाः काश्चन गृह्णता ॥ ६२ ॥

अथाभ्यर्च्य स गुर्वादीनन्तर्वाणिशतक्रतुः ।
प्रीतः प्रतस्थे ग्रामाय हमजापुरसंज्ञिने ॥ ६३ ॥

पूर्णचन्द्रमिवामन्दं प्रसन्नोल्लासवल्लीवृतम् ।
स विद्याब्धिस्तमासाद्य मुदं कामप्यविन्दत ॥ ६४ ॥

---

१. श्रद्धाधीने। २. ससम्भ्रान्तं संयुक्तान्तं वा। ३. विततं ततं वीणादिवाद्यं [illegible]। ४. अश्नीत पिबतेत्येवं सततं यत्राभिधीयते साश्नीतपिबता। ५. 'दिटच्' इत्यातिशायने तमप्। ६. स्वीकृतानि। उपपूर्वको यमिः स्वीकरणे वर्तते, ततः कर्मणि लुङ्। ७. नयतिर्द्विकर्मकस्तत्र प्रधानकर्मणि लुङ्। ८. अनिन्दितेन। ९. [illegible]।

धिन्वंस्त्रेता[1]मनूचानः[2] स हिन्वन्[3]सुकृतं मुहुः ।
तत्रास्त कतिचिन्मासान्कृतदारपरिग्रहः ॥ ६५ ॥
अथ श्रीरामसिंहस्य माहेश्वरशिखामणेः ।
फुल्ला कीर्तिरमुष्यागादसकृत्कर्णपूरताम् ॥ ६६ ॥
ततो दैवज्ञवेतण्डः[4] स भूजानिदिदृक्षया ।
कमलाध्येयसौभाग्यां पुरीं जयपुरीमयात् ॥ ६७ ॥
या[5] भाति न्यायनीवीव प्रकाशितनवक्षणा ।
परं गुणिनि वर्वर्ति यत्र शक्तिर्विलक्षणा ॥ ६८ ॥
प्रसरत्कीर्तिकर्पूरकरण्डीभूतभूतलम् ।
उपतस्थे स वागीशो रामसिंहविडौजसम् ॥ ६९ ॥
विकसत्स्फारसत्कारपरिष्कारपुरःसरम् ।
स राजावीवसद्रूप[6]मभिरूप[7]ममा[8]शु तम् ॥ ७० ॥
अमलगुणसमृद्ध्या रञ्जयन्पौरवर्गा-
　　नतिविसृमरकीर्त्या भूपयन्भूमिभागान् ।
स सह निखिलविद्यामार्मिकैर्मित्रलोकै-
　　ररमत जयपुर्यां रामसिंहाश्रयेण ॥ ७१ ॥
अनुगृहमनुरथ्यं तथ्ययत्प्रेमबन्ध-
　　व्यतिकरपरिनिष्ठान्मानवान्वीक्ष्य वीक्ष्य ।
इह जयपुरमध्येऽमुष्य कस्को महीया-
　　न्सुहृदिति परिमातुं मानसं बम्भ्रमीति ॥ ७२ ॥

---

१. दक्षिणाग्निगार्हपत्याहवनीयरूपमग्नित्रयं त्रेतेति कथ्यते । २. साङ्गे वेदेऽधीती । ३. अत्र वृद्ध्यर्थको हिनोतिः । ४. वेतण्डो गजः, उपमितसमासः । ५. प्रकाशिताः प्रकटिता नवा नूतनाः क्षणा उत्सवा यस्यां तथाभूता या पुरी न्यायपद्धतिरिव । इयं च कीदृशी । प्रदर्शिता नवसंख्याकाः परमाणुपाकक्षणा यस्यां सा । यद्यपि वैशेषिकैरेवायं पक्षोऽङ्गीक्रियते न तावन्नैयायिकैस्तथापीह न्यायशब्देन सामान्यन्यायग्रहस्तेनाक्षपादकणभक्षपक्षयोरपि संग्रहः । गुणे शक्तिर्गुणिनि लक्षणेति नैयायिककुलालापः, परं यत्र गुणिनि विलक्षणा शक्तिर्जागर्तीति व्यतिरेकोद्भावनम् । गुणा औदार्यादयः शुक्लादयश्चेति तत्त्वम् । ६. 'प्रशंसायां रूपप्' इति रूपप् । ७. पण्डितम् । ८. अमा समीपे ।

अयमहह कविः किं विष्णुगुप्तोऽथ वा किं
किमु सकलकलाविन्मण्डनं मूलदेवः।
इति विविधविकल्पा यन्नयप्रेक्षकाणां
प्रतिकलमतिवेलं मानसे प्रादुरासन् ॥ ७३ ॥

स जयनगर-रीवाँलब्धलक्ष्मीसनाथः
कवितृगुरुदयालोः संभवः श्यामनाथः।
सदुपकरणसज्जं सज्जनानन्ददात्रे
सदनवरममुष्मै सादरं यच्छति स्म ॥ ७४ ॥

अथ स सुकृतसक्तो मातृदारादियुक्तो
विकसितहरिभक्त्या रामसिंहानुमत्या।
अनवरतसमुद्यद्भावपीयूषधारा-
स्नपितमति चचाल श्रीवदर्याश्रमाय ॥ ७५ ॥

अधिहृदयसरोजं ब्रह्मचिन्तापराणा-
मुपनदि विजयन्ते यज्वनां यत्र वर्गाः।
विविधजनिचितानां पातकानां विपक्षं
तदतिरुचि स गङ्गाद्वारमैक्षिष्ट धन्यः ॥ ७६ ॥

घटयति मुदमन्तर्यत्र वल्लीमतल्ली-
जटिलतरुनिवेशः कुब्जकाम्रप्रदेशः।
तमनुदिवसदीव्यद्भक्तिसंपत्तिलीला-
वलयितहृदयः स श्रीहृषीकेशमाप ॥ ७७ ॥

श्वसनचलनलीलालोलकूलप्ररूढ-
द्रुमकुसुमपरागासारसौरभ्यगर्भाः।

---

१. विष्णुगुप्तश्चाणक्यः। २. मूलदेवनामा कश्चिदतिप्राचीनः कलाशास्त्रप्रवर्तको धूर्तः। तस्यैव कर्णीसुतः, कलाङ्कुरः, मूलभद्रः, एतान्यपि नामान्तराणि वर्तन्ते। वासवदत्तायां स्वयंवरवर्णनावसरे 'तत्र च केचित्कलाङ्कुरा इव विजितनगरमण्डनाः' इत्यास्ते। ३. हरि-द्वारम्।

दधति कमपि मोदं यत्र गङ्गातरङ्गाः
स सुखखनिरनेनालोकि देवप्रयागः ॥ ७८ ॥

विकचकुसुमभाराभुग्नकुञ्जान्तरालो-
ल्लसदमरवधूटीगीतरुद्रा[1]वदानः ।
अचलपतदमन्दध्वानवारिप्रवाह-
च्छुरितसृतिरनेनावन्दि रुद्रप्रयागः ॥ ७९ ॥

जयति जगदमन्दानन्दमन्दारशाखी
तुहिनकरकिरीटो यत्र केदारनाथः ।
तमतनुवृ[2]पलभ्यं देशमासाद्य विद्वा-
न्कृतयजनमथैनं वाग्विलासैरनौपीत् ॥ ८० ॥

आ[3]स्माकीनं करालं जवमिह भुवने कः सँहे[4]दित्यखर्वा-
हंकारोल्लासवल्गल्लहरिशतलुठल्लोलयादोमतल्ली ।
मल्लीमालेव यस्योद्भटविकटजटाकोटरे निष्पतन्ती
दीव्यत्यभ्रस्रवन्ती स मम हृदि सदा भातु चन्द्रार्धमौलिः ॥ ८१ ॥

व्योम्नीवाम्भोदलेखा ह्रद इव लहरीधोरणी पूषणीव
श्या[5]माकान्तांशुलक्ष्मीरुदयमथ लयं याति यत्र त्रिलोकी ।
ज्वालाजिह्वालफालज्वलनकवलितोद्दर्पकंदर्पवीरो
हीरो वृन्दारकाणां विशदयतुतरां शेमुषीं सोऽष्टमूर्तिः ॥ ८२ ॥

उद्यत्सान्द्राम्बुवाहव्यतिकरसुषमासंनिभे कण्ठपीठे
शंपारा[6]जीव यस्यावनिधरदुहितुर्दोर्लता जा[7]ज्वलीति ।
स त्रैलोक्यैकनाथोऽदितितनयधुनीमुग्धडिण्डीरपिण्ड-
प्रख्यः श्रीक[8]ङ्कटीको मम निविडतमोग्रन्थिभेदाय भूयात् ॥ ८३ ॥

---

१. अवदानं कर्मवृत्तम् । २. वृषः सुकृतम् । ३. 'तस्मिन्नणि च—' इत्यस्माकादेशे रूपम् । ४. 'आधृषाद्वा' इति वैभाषिको णिच्, अत एव 'स एवायं नागः सहति कलभेभ्यः परिभवम्' इत्यादि संगच्छते । ५. श्यामाकान्तश्चन्द्रः । ६. राजी लेखा । ७. यङ्लुकि रूपम् । ८. कङ्कटीकः शिवः ।

संतापस्विन्नचूडामृतकिरणगलत्स्फारपीयूषधारा-
फाला[1]ग्नौ यस्य दुग्धाहुतिरिव सततं निष्पतन्ती चकास्ति ।
स ब्रह्माण्डप्रकाशावनलयघटनानाटिकासूत्रधारो
गौरीप्राणप्रियो नः प्रथयतु सुतरां तानि ता[2]नीहितानि ॥ ८४ ॥

श्रीपीयूषादिवस्तुप्रकरविभजनोद्भूतवादैकविज्ञा
देवंमन्या महेच्छा अहह कति दिवो भारभूता न सन्ति ।
देवस्त्वेकस्त्रिलोकाज्वरविषकवलीकारकेलीविदग्धो
वर्वर्त्यार्तानुकम्पाकृततनुरचना[3]सेचनो रेरि[4]हाणः ॥ ८५ ॥

पु[5]ष्पानेहेव बाढं विबुधविटपिपृत्कर्षगुच्छप्रकर्षं
तन्वन्सु[6]स्तोऽपि सद्यो मयपुरदहनं यो व्यधाद्विश्वभूत्यै ।
सोऽव्यादेकोऽप्य[7]नन्तो यतिरपि सततं[8]हीनभोगी प्रकामं
का[9]न्ताश्लिष्टोऽप्य[10]कान्तः शशधरमुकुटालंकृतिर्देवदेवः ॥ ८६ ॥

देवानां सार्वभौमो विविधभवभवाज्ञानवाटीकुठारः
श्रेयःश्रीरङ्गशालाखिलनिगमकलाकल्पनोल्लाससीमा ।
सर्वांहोभङ्गबीजं मुनिजनहृदयागाररत्नप्रदीपः
कश्चिद्भूमास्तु भूत्यै स्फुटकुमुदवनीभार्गवीगेयकान्तिः ॥ ८७ ॥

क्रोडक्रीडत्पृदाकूत्कटविकटजटाटोपटंकारकेलि-
त्रुट्यन्नक्षत्रचक्रक्रमिकचटचटाकारिवृष्टिप्रकृष्टम् ।
उच्चैर्दोर्दण्डषण्डभ्रमणवलयिताशेभचीत्कारच[11]ण्डं
पादप्रक्षेपकम्प्रक्षिति मदनकृपस्ताण्डवं नः पुनातु ॥ ८८ ॥

इतीशमभिवन्द्य स स्फुरदसीमभक्तिच्छटा-
सुधामसृणमानसो गिरिविभूतिमालोकयन् ।

---

१. ललाटपावके । २. ईहितानीति च्छेदः । ३. आलेचनमतिमनोहरम् । ४. रेरिहाणो महादेवः । ५. पुष्पानेहा वसन्तः । ६. सुष्टु शोभना सा जटा यस्येति विरोधपरिहारः । ७. न विद्यतेऽन्तो यस्येति परिहारः । ८. अहीनः, अहीनामिनः, इति यथायोग्यमनुसंधेयम् । ९. अर्धनारीश्वरत्वादित्यर्थः । १०. अकानां दुःखानां पापानां वा अन्तो नाशो यस्मादिति परिहारः । ११. चण्डं तीक्ष्णम् ।

पुरंदरपुराङ्गनासुभगदोलिकान्दोलन-
स्खलत्कुसुमपादपं बदरिकाश्रमं प्राप्तवान् ॥ ८९ ॥

दवीयसि मनोहरा व्यतिकरेण दुःखप्रदा
मनागपि निषेविता हृदयकम्पलीलावहाः ।
अनन्तपदरोधिकास्तुहिनवृष्टयः केवलं
कदाचन करालतां दधति यत्र कायस्थवत् ॥ ९० ॥

स्फायत्सान्द्रतुषारवर्षविकसत्सर्वाङ्गकम्पोदये
यस्मिँल्लोकमहेशितुर्भगवतो नारायणस्याज्ञया ।
निष्टप्तोदककैतवेन दहनो न प्राज्वलिष्यद्यदा
सा सा सज्जनधर्मकर्मकलना नैवाभविष्यत्तदा ॥ ९१ ॥

न्यक्कुर्वन्स्फुटकोटिभङ्गिरचनैः प्राभाकरं मण्डलं
शक्तिं काञ्चनभास्वरां प्रकटयञ्जात्याकृतिव्यक्तिषु ।
अर्थापत्तिनिवारणैकनिपुणो द्रव्यप्रपञ्चोर्जित-
स्तस्मिंस्तर्कवदैक्षि येन कृतिना नारायणस्यालयः ॥ ९२ ॥

तत्रान्तस्तिमिरावलीं कवलयञ्ज्ञानाङ्कुरं वर्धय-
न्नानन्दं रचयंस्तपस्यतितरां नारायणो योऽनिशम् ।

---

१. येन कृतिना तस्मिन्बदरिकाश्रमे तर्कवन्न्यायशास्त्रवन्नारायणस्यालयः पर्वतरूपो मण्डपरूपो वा ऐक्षि व्यलोकि । किंभूतः । स्फुटाः प्रकटा याः कोटयोऽग्रभागास्तासां भङ्गिरचनैर्विन्यासकरणैः; (पक्षे) स्फुटा अव्यभिचरिता याः कोटयः पूर्वोत्तरपक्षसंबन्धिन्य उक्तिप्रत्युक्तयस्तासां भङ्गिरचनैः परिष्कारविशेषकल्पनैः । प्राभाकरं मण्डलं रविबिम्बम्; (पक्षे) प्रभाकरापरनामधेयस्य गुरोर्मण्डलं तदनुयायिमीमांसकवर्गं न्यक्कुर्वंस्तिरस्कुर्वन् । पुनः । जात्या रमणीया श्रेष्ठा वा, या आकृतिस्तस्या व्यक्तिषु; (पक्षे) जातिः समानप्रसवात्मिका, आकृतिर्जातिलिङ्गाख्या, व्यक्तिर्गुणविशेषाश्रयो मूर्तिः तासु । काञ्चनेन भास्वरां शक्तिम्; (पक्षे) कांचन अनिर्वचनीयां भास्वरां तत्तत्पदार्थविशेषसंक्रमणक्षमसामर्थ्यविकस्वरां शक्तिमर्थस्मृत्यनुकूलं पदपदार्थसंबन्धं प्रकटयन् । अर्थानामापत्तिनिराकरणे एको निपुणः; (पक्षे) अर्थापत्तिः प्रमाणान्तरम्, सा नैयायिकैर्नाद्रियते, अत एवोक्तम्—'अर्थापत्तिस्तु नैवेह प्रमाणान्तरमिष्यते । व्यतिरेकव्याप्तिबुद्ध्या चरितार्था हि सा यतः ॥' इति । द्रव्याणां वित्तानाम्; (पक्षे) नवसंख्याकानां प्रपञ्चैर्विस्तारैर्विस्तरैश्च ऊर्जितः ।

तं योगीश्वरवृन्दवन्दितपदद्वन्द्वं स मात्रादिभिः
साकं पूजयति स्म दानविकसद्धूनिर्जरालोकवाक् ॥ ९३ ॥
तत्रोवास दिनानि पञ्च सुकृती सर्वार्थसंपादकं
श्रीनारायणपादपद्मयुगलं नक्तंदिवं चिन्तयन् ।
प्रत्यावृत्य ततोऽथ निर्मलझरान्वेल्लल्लताग्रान्नगा-
न्पश्यन्नेष शनैः शनैर्जयपुरीं प्राप स्वकीयैः सह ॥ ९४ ॥

तत्रानन्दमरन्दतुन्दिलमनाः स श्यामनाथादिभिः
शास्त्रालोडनजागरूकधिषणोन्मेषैः सुहृद्भिः समम् ।
प्रीतिं पल्लवयञ्श्रुतानि कलयन्विद्यार्थिनः पाठयं-
स्तत्तद्ग्रन्थशताशयं विशदयन्कालं किलायापयत् ॥ ९५ ॥

येनोद्यत्प्रतिभेन कुञ्जरनभोभोगीन्दु(१८०८)संख्ये शके
सार्धं श्रीयुतकाशिनाथविदुषा मुम्बापुरीवर्तिनि ।
यन्त्रे निर्णयसागरेऽद्भुततरे श्रीजावजीश्रेष्ठिनः
प्रावर्ति प्रतिमासजन्मघटना सा काव्यमालामला ॥ ९६ ॥
वाढोत्कर्षतया यया स्वविषये व्युत्पत्तिचर्याचणा
भूयांसः कृतिनोऽत्र मौर्ख्यकलनावैदग्ध्यमध्यापिताः ।
तस्याः काव्यकलाकलापलतिकाप्रागल्भ्यलक्ष्मीभुवो
माहात्म्यं गदितुं मनागपि मया मूढेन किं पार्यते ॥ ९७ ॥

श्लाघ्यश्चित्रपवित्रकीर्तिसदनं दुर्गाप्रसादो बुधः
काशीनाथधरामरोऽमलयशाः श्रीजावजीश्रेष्ठ्यपि ।
सूर्यस्येव कलानिधेरिव बृहद्भानोरिवाच्छिद्यते
यत्सत्त्वैर्युगपद्भि लोकतिमिरं श्रीकाव्यमालात्मकैः ॥ ९८ ॥

विद्याशास्त्रकलाकलापकलनाकूपारमन्थाद्रिणा
पी. पीटर्सनपण्डितेन सुहृदा साकं स वागीश्वरः ।

---

१. क्रियाविशेषणम् । २. झरा वारिप्रवाहाः । ३. 'ङ्यापोः संज्ञाछन्दसोर्बहुलम्' इति ह्रस्वत्वम् । ४. मौर्ख्यं मूर्खत्वम् । ष्यञ् । ५. बृहद्भानुः पावकः । ६. चक्रवर्तिः ।

एकीभूय सुभाषितावलिमथो तान्कामसूत्रादिका-
न्ग्रन्थान्संस्कुरुते स्म सुज्ञहृदयाम्भोजप्रसत्त्यै स्वयम् ॥ ९९ ॥

तत्तद्देवविशेषदर्शनकनत्सान्द्रानुरागेण यो
विद्वानङ्गकलिङ्गवङ्गमगधान्देशाल्लुँलोकेतराम् ।

पी. पीटर्सनसूरिणा सह लसत्स्फारप्रमोदोद्गमो
वाचोयुक्तिपटुश्च गुर्जरमहाराष्ट्रान्ध्रकर्णाटकान् ॥ १०० ॥

अखानि कूपो हमजापुरेऽमुना रसान्तरोद्यज्जलपूरपूरितः ।
अकारि चाभ्रंकपकेतुवन्धुरं गिरीन्द्रकन्यादयितस्य मन्दिरम् ॥ १०१ ॥

एकदा निजकलत्रनोदितं लोहतन्तुसरणीसमागतम् ।
स्वान्तपद्महिमवर्षणायितं वृत्तजातमयमित्यवाचयत् ॥ १०२ ॥

'जृम्भतेऽत्र सुतरां खलु मारी पीड्यते तव सुतादि तया हा ।
एहि कारुणिक सत्वरमाराद्वेपतेऽथ वलते मम चेतः ॥ १०३ ॥'

अथ पण्डितोऽपि सहसा विकलोऽनभिभाष्य कांश्चिदपि मित्रजनान् ।
जवनेन धूमशकटेन ययौ हमजापुराय लघु सोऽनुमनः ॥ १०४ ॥

निष्काश्यन्ते पितृवनकृते केऽपि, केचिन्म्रियन्ते,
लोलुठ्यन्ते कतिचन भुवि स्रस्तसर्वाङ्गबन्धाः ।
केचिन्मूर्छन्त्यहह, कतिचित्संचिकित्स्यन्त उच्चै-
रेवं मारीविकृतिरभवद्यत्र तं ग्राममापत् ॥ १०५ ॥

तत्रावासे कन्ययोः कालधर्मं श्रुत्वा रुग्णं दारकं वीक्ष्य धीरः ।
एनं सम्यक्संचिकित्सांबभूव प्राक्पुण्येनाभावि कल्येन तेन ॥ १०६ ॥

अथ स सुमना वेदक्षोणीगजेन्दु(१८१४)मिते शके-
ऽसितदलभुवि ज्येष्ठाष्टम्यां भृगौ हमजापुरे ।

---

...कनी दीप्तौ । २. वाचो युक्तिः, 'वाग्दिक्पश्यद्भ्यः–' इति षष्ठ्या अलुक् । तत्र
१. ...गीत्यर्थः । ३. लोकप्रसिद्धतारमार्गेण प्राप्तम् । ४. तन्नाम्ना प्रसिद्धो रोगविशेषः ।
पटुः, वाग्मी... रेलनाम्ना प्रसिद्धेन धूमयानेन । ७. श्मशानार्थम् । ८. मृत्युम् । ९. आ-
५. समीपम् । ६... निरामयः । ११. अर्थात् १८९२एतत्संख्याकस्य खिस्ताब्दस्य मेसंज्ञके
त्मजम् । १०. कल्यो... १२. कृष्णपक्षसंबन्धिन्याम् ।
मासेऽष्टादशतारकायाम् ...त्रेह प्रमाणा...
...पः (पक्षे

पठनकृतये गीर्वाणानां ध्रुवं मतिचातुरी-
विजितधिषणः शक्राहूतो ययावमरावतीम् ॥ १०७ ॥

गतवति त्रिदिवं निजवल्लभे तदवसानविधिं विरचय्य सा ।
तनुभुवा सह तस्य कुटुम्बिनी जयपुरीमविलम्बितमायत ॥ १०८ ॥

अलं राजहंसाभिमानच्छिदायै यदीयौ सुकीर्तिप्रतापौ विभातः ।
स राड्रामसिंहात्मजो माधवेन्द्रस्तयोर्जीविकां प्रीतिपूर्वं चकार ॥ १०९ ॥

स्फारसौजन्यपीयूषसिक्तात्मनः काशिनाथाभिधानस्य सूरेरथ ।
जावजीभू-तुकारामसच्छ्रेष्ठिनो योगतः पूर्ववत्काव्यमालाततिः ॥ ११० ॥

मुम्बापुरपाठवेशमविज्ञं पी. पीटर्सनशास्त्रसिन्धुराजम् ।
तच्छोधनकर्मणावशिष्टा क्लिष्टा राजतरङ्गिणी जगाम ॥ १११ ॥

तदुपरि किल टिप्पणीचिकीर्षा सकलरहस्यविदो गुरोर्ममासीत् ।
इति तदभिमतस्य पूर्तिसिद्ध्यै विवृतिकृते मयका प्रयत्यतेऽद्य ॥ ११२ ॥

युक्तायुक्तविवेकमार्मिकतया जीवायमानोऽनिशं
यस्यामात्यधुरंधरो विजयते श्रीकान्तिचन्द्रो द्विजः ।
तस्य श्रीयुतमाधवेन्द्रनृपतेर्दोःकल्पवृक्षाश्रितो
हृष्टस्तच्छिशुरेधते जयपुरे केदारसंज्ञोऽधुना ॥ ११३ ॥

द्योतन्तां क्षितिमण्डले पार्वणचन्द्रमहांसि ।
तस्यामलगुणधोरणीसंभूतानि यशांसि ॥ ११४ ॥

तातश्रीसरयूप्रसादचरणस्वर्वृक्षसेवापरो
मातृश्रीहरदेव्यपारकरुणापीयूषपूर्णान्तरः ।
हृत्पद्मभ्रमरायमाणगिरिशो दुर्गाप्रसादः सुधी-
रास्ते तद्रचनांसकौ सुकृतिनां कण्ठेषु हारायताम् ॥ ११५ ॥

इत्ययोध्यापरप्रान्तवर्तिपण्डितपुरीवास्तव्यद्विवेदोपाख्याचार्यसरयूप्रसादसुत-
दुर्गाप्रसादविरचितं प्रसादशतकम् ।

---

१. अव गर्ते । २. राजा चन्द्रः, हंसः सूर्यः, वा राजहंसा राजश्रेष्ठाः । ३. भिदादित्वादङ् ।
४. जीवो बृहस्पतिः । ५. [illegible], '[illegible]' [illegible] ।

KÂVYAMÂLÂ. 19.



# THE S'ÛRYAS'ATAKA

OF

# MAYÛRA.

With the Commentary of Tribhuvanapâla

EDITED BY

PAṆDIT DURGÂPRASÂD

AND

KÂS'ÎNÂTH PÂṆDURANG PARAB.



PRINTED AND PUBLISHED

BY

THE PROPRIETOR

OF

THE "NIRṆAYA-SÂGARA" PRESS.

BOMBAY.

1889.

*Price 6 Annas.*

काव्यमाला. १९.

श्रीमयूरकविविरचितं

# सूर्यशतकम् ।

त्रिभुवनपालप्रणीतया टीकया समेतम् ।

जयपुरमहाराजाश्रितेन पण्डितव्रजलालसूनुना पण्डित-
दुर्गाप्रसादेन, मुम्बापुरवासिना परबोपाह्व-
पाण्डुरङ्गात्मजकाशिनाथशर्मणा च
संशोधितम् ।

तच्च

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतम् ।

१८८९



मूल्यं ६ आणकाः ।



# काव्यमाला।

## महाकविश्रीमयूरप्रणीतं
## सूर्यशतकम्।

श्रीत्रिभुवनपालविरचितया टीकयान्वितम्।

जम्भारातीभकुम्भोद्भवमिव दधतः सान्द्रसिन्दूररेणुं
 रक्ताः सिक्ता इवौघैरुदयगिरितटीधातुधाराद्रवस्य।

---

१. सूर्यशतकप्रणेता श्रीमयूरकविर्बाणभट्टस्य श्वशुर उज्जयिन्यां वृद्धभोजमहीपतेः सभायामासीदिति मानतुङ्गाचार्यप्रणीतभक्तामराख्यस्तोत्रटीकाप्रारम्भे मेरुतुङ्गप्रणीतप्रबन्धचिन्तामणौ च समुपलभ्यते. प्रबन्धचिन्तामणौ बाणभट्टो मयूरस्य भगिनीपतिरासीदित्युक्तमस्ति. अथ च 'अहो प्रभावो वाग्देव्या यन्मातङ्गदिवाकरः। श्रीहर्षस्याभवत्सभ्यः समो बाणमयूरयोः॥' इति शार्ङ्गधरपद्धत्यादिप्रसिद्धराजशेखरपद्येनापि बाणमयूरयोः समकालोद्भवत्वं प्रतीयते. तस्मान्मयूरकविरपि ख्रिस्ताब्दीयसप्तमशतकपूर्वार्धसमुद्भूत इति ज्ञेयम्. सूर्यशतकमपहाय मयूरप्रणीतः कोऽप्यन्यो ग्रन्थो नाद्याप्युपलब्धः. सूर्यशतकपद्यानि तु ध्वन्यालोककाव्यप्रकाशादिषूदाहृतानि सन्ति. दृश्यन्ते च सूर्यशतकातिरिक्ता अपि कतिपयश्लोकाः सुभाषितावल्यादिषु मयूरनाम्ना समुद्धृताः. 'दर्पं कविभुजंगानां गता श्रवणगोचरम्। विषविद्येव मायूरी मायूरी वाङ्निकृन्तति॥' इति मयूरप्रशंसापद्यं च सूक्तिमुक्तावलौ राजशेखरनाम्ना समुद्धृतं वर्तते. सूर्यशतकस्य काश्मीरकवल्लभदेव-मधुसूदन-त्रिभुवनपालविरचितं टीकात्रयं प्राचीनम्, यज्ञेश्वरशास्त्रिप्रणीता नवीना टीका च वर्तते. तत्र वल्लभदेवकृतटीकास्माभिः कश्मीरेषु षट्त्रिंशश्लोकपर्यन्तमासादिता. मधुसूदनकृता नोपलब्धा. अतस्त्रिभुवनपालविरचितटीकासमेतमेतच्छतकं मुद्रयितुमारब्धम्. तत्रास्मन्मुद्रणाधारभूतानि पुस्तकान्येतानि—प्रथमं त्रिभुवनपालकृतटीकासमेतं प्रायः शुद्धं १६८५ मिते शकाब्दे लिखितं एकोनत्रिंशत्पत्रात्मकं मुम्बईनगरवास्तव्यश्रीपण्डितज्येष्ठाराममुकुन्दजीशर्मणां सकाशादधिगतम्; द्वितीयं तादृशमेव पुस्तकं नातिशुद्धं वर्षशतद्वयप्राचीनमिवोपलक्ष्यमाणं त्रिपञ्चाशत्पत्रात्मकं जयपुरराजगुरुकुलोद्भूतोदुम्बरभट्टश्रीकृष्णकुमारशर्मणां संग्रहादागतम्, तत्र त्रिभुवनपालस्य नाम नास्ति; तृतीयं मूलमात्रं षट्त्रिंशश्लोकपर्यन्तं वल्लभदेवकृतटीकोद्धृतटिप्पणसमेतं नवीनं कश्मीरलिखितं पण्डितदुर्गाप्रसादस्वकीयम्. २. 'सक्तैः' इति पाठान्तरम्, 'संसक्तैः' इति वल्लभदेवव्याख्यानं च. 'शतकेऽस्मिन्स्रग्धरावृत्तम्। आशीर्नामान्यालंकारः सर्वत्रैव। विशेषालंकारस्तूत्प्रेक्षादिः' इत्यपि वल्लभदेवव्याख्यानम्.

आयान्त्या तुल्यकालं कमलवनरुचेवारुणा वो विभूत्यै
भूयासुर्भासयन्तो भुवनमभिनवा भानवो भानवीयाः ॥ १ ॥

अभिनवा नूतना भानवीया भानवः सावित्रा रश्मयो वो युष्मभ्यं विभूत्यै समृद्ध्यै भूयासुर्भवन्तु । किं कुर्वन्तः । सान्द्रश्चासौ सिन्दूररेणुश्च सान्द्रो बहलः सिन्दूररेणुः सिन्दूररजस्तद्दधत इव । किंभूतम् । जम्भस्यारातिर्जम्भारातिः शक्रस्तस्येभो हस्ती ऐरावणस्तस्य कुम्भौ मस्तकौ तयोस्तौ वा उद्भवो यस्येति विग्रहः । एतदुक्तं भवति—ये स्वर्गस्थास्ते उदयरागभृतस्तानवलोक्यैरावणकुम्भस्थं सिन्दूररेणुं दधत इव मन्यन्ते । उदयश्चासौ गिरिश्च तस्य तटी तस्या धातवो गैरिकादयस्तेषां धाराकारो द्रवो धाराद्रवः प्रपातस्तस्येवौघैः प्रवाहैः समूहैरविच्छिन्नैः सिक्ता अत एव रक्ता इव । उदयगिरिस्थानामेवं बुद्धिर्जायते तुल्यकालं समकालमायान्त्या आगच्छन्त्या पद्मखण्डदीप्त्या इवारुणाः । सहैव सवित्रा कमलवनानां रुगागच्छति । एवं दीप्त्या धरास्थानां प्रतीतिर्भवति । किं कुर्वन्तो भानवः । त्रैलोक्यमुद्भासयन्तः । अभिनवत्वं तेषां दिक्करणापेक्षया ॥

भक्तिप्रह्वाय दातुं मुकुलपुटकुटीकोटरक्रोडलीनां
लक्ष्मीमाक्रष्टुकामा इव कमलवनोद्घाटनं कुर्वते ये ।
कालाकारान्धकाराननपतितजगत्साध्वसध्वंसकल्याः
कल्याणं वः क्रियासुः किसलयरुचयस्ते करा भास्करस्य ॥ २ ॥

ते भास्करस्य करा वो युष्माकं कल्याणं क्रियासुर्विधेयासुः । ये कमलवनोद्घाटनं कुर्वते पद्मखण्डानामुन्मीलनं विदधते । उत्प्रेक्षते—लक्ष्मीमाक्रष्टुकामा इवापक्रष्टुमनस इव । यतो लक्ष्मीं सदैव कमलवनेषु कृतसंनिधानामाक्रष्टुमिव । किं कर्तुम् । दातुं वितरितुम् । कस्मै । भक्तिप्रह्वाय । भक्त्या प्रह्वो नम्रो भक्तिप्रह्वस्तस्मै । कीदृशीं श्रियम् । मुकुलपुटकुटीकोटरक्रोडलीनाम् । मुकुलशब्देन कुड्मलमुच्यते । तस्य यः पुटः स एव कुटी शालेव मुकुलपुटकुटी तस्याः कोटरमभ्यन्तरं तस्य क्रोडोऽवनम्रप्रदेशस्तत्र लीनां संश्लिष्टाम् । कीदृशाः कराः । कालाकारान्धकाराननपतितजगत्साध्वसध्वंसकल्याः । कालस्येवाकारो यस्य स कालाकारः स चासावन्धकारश्च तस्याननं मुखं तत्र पतितं यज्जगत्तस्य साध्वसं भयं तस्य ध्वंसो नाशस्तत्र कल्याः पटवः समर्था एव । पुनः किंलक्षणाः । किसलयरुचयः किसलयानामिव रुचिर्येषां तेऽभिनवाङ्कुरभासः ॥

गर्भेष्वम्भोरुहाणां शिखरिषु च शिताग्रेषु तुल्यं पतन्तः
प्रारम्भे वासरस्य व्युपरतिसमये चैकरूपास्तथैव ।

---

१. 'कार्ष्ण्याद्भयंकरत्वाच्च कालनिभोऽन्धकारः' इति वल्लभः.

निष्पर्यायं प्रवृत्तास्त्रिभुवनभवनप्राङ्गणे पान्तु युष्मा-
नूष्माणं संतताध्वश्रमजमिव भृशं बिभ्रतो ब्रध्नपादाः ॥ ३ ॥

ब्रध्नः सूर्यस्तस्य पादा रश्मयः पान्त्ववन्तु । कान् । वो युष्मान् । किं कुर्वन्तः । अम्भोरुहाणां पद्मानां गर्भेष्वभ्यन्तरेषु शिखरिषु च पर्वतेषु शिताग्रेषु तीक्ष्णप्रान्तेषु तुल्यं समं पतन्तो गच्छन्तः । अन्यस्य हि पादा यथा हरितशाद्वलोपचितायां भूमौ निपतन्ति तथा न शर्करिलायां कण्टकितायां वा । ब्रध्नस्य पुनर्मार्दवातिशययुक्तेषु पद्मगर्भेषु तीक्ष्णशृङ्गेषु च पर्वतेषु समं पतन्ति । वासरस्य दिवसस्य प्रारम्भे मुखे तस्यैव व्युपरतिसमये चास्तमनकाले तथैव सदृशा एकरूपाः । त्रिभुवनं भवनप्राङ्गणमिव त्रिभुवनभवनप्राङ्गणं तस्मिंस्त्रैलोक्यवेश्माजिरे निष्पर्यायमविद्यमानक्रमं प्रवृत्ताः प्रसृताः । अन्यस्य हि पादाश्चरणा गृहाङ्गणे पर्यायेण प्रवर्तन्ते । तस्य पुनः समकालमेव । ऊष्माणमौष्ण्यं भृशं बिभ्रतोऽत्यर्थं दधतः । उत्प्रेक्षते—संतताध्वश्रमजमिव । संततश्चासावध्वा च संतताध्वा । अध्वशब्दोऽत्राधिकगमने वर्तते । तेन श्रमस्तस्माज्जातस्तमिव । भृशमविच्छिन्नं गाढं गमनखेदसंभवमिव । अन्यो हि यः पान्थस्तस्य पादा ऊष्माणमेव बिभ्रति दधति ॥

प्रभ्रश्यत्युत्तरीयत्विषि तमसि समुद्वीक्ष्य वीतावृतीन्प्रा-
ग्जन्तूंस्तन्तून्यथा यानतनु वितनुते तिग्मरोचिर्मरीचीन् ।
ते सान्द्रीभूय सद्यः क्रमविशददशाशादशालीविशालं
शश्वत्संपादयन्तोऽम्बरममलमलं मङ्गलं वो दिशन्तु ॥ ४ ॥

ते रश्मयो मरीचयो मङ्गलं कल्याणं वो दिशन्तु ददतु । यान्किरणांस्तिग्मरोचिस्तीक्ष्णदीधितिः सूर्यो वितनुते विस्तारयति । कथं यथा भवति । अतनु विस्तीर्णं यथा भवति। किं कृत्वा। जन्तून्प्राणिनो वीतावृतीन्, आवरणमावृतिः, वीता गता आवृतिर्येषां ते तान्समवलोक्य समुद्वीक्ष्य । प्राक्पूर्वं तमस्यन्धकारे प्रभ्रश्यति पतति सति । कीदृशे। उत्तरीयस्येव त्विड् यस्य तदुत्तरीयत्विट् तस्मिन्नंशुकनिभे तिमिरे । यानिव । तन्तून्यथा । तन्तवः सूत्राणि यथा तान् । यथा कश्चित्तन्तुवायोऽतनुपटान्वितनुते प्राणभृतो विगतवाससो दृष्ट्वा । ते सान्द्रीभूय घनतां प्राप्याम्बरं वासोऽमलं विमलमुत्पादयन्ति एवं मरीचयोऽपि सान्द्रीभूय सद्यस्तत्क्षणमम्बरमाकाशं शश्वत्सदा विमलमुत्पादयन्ति । कीदृशम्। क्रमविशददशाशादशालीविशालम् । क्रमेण पर्यायेण विशदाः परिपाट्या स्पष्टा दश च ता आशाश्च दशाशा दश दिशः तत्संबन्धिन्यश्च ता दशाश्च ता एव दशास्तासामाली पङ्क्तिस्तया विशालं विस्तीर्णम् । तदपि वासो दशालीविशालम् ॥

न्यक्कुर्वन्नोषधीशे मुषितरुचि शुचेवौषधीः प्रोषिताभा
भास्वद्ग्रावोद्गतेन प्रथममिव कृताभ्युत्थितिः पावकेन ।

---

१. 'यो हि यत्प्रसादेन लब्धात्मलाभः स तस्याभ्युत्थानं करोति' इति भावः.

पक्षच्छेदव्रणासृक्स्रुत इव दृषदो दर्शयन्प्रातरद्रे-
राताम्रस्तीव्रभानोरनभिमतनुदे स्ताद्गभस्त्युद्गमो वः ॥ ५ ॥

तीव्रभानोर्गभस्त्युद्गमः किरणोदयो वो युष्माकमनभिमतनुदे अनभिमतमनभीष्टं पापं शत्रुर्वा तस्य नोदनं नुत् तस्यै स्ताद्भवतात् । कीदृश इव । पूर्वं प्रथमं पावकेन वह्निना कृताभ्युद्गतिरिव । अभ्युद्गमनमभ्युद्गतिः । विहितस्वागत इव । किंभूतेन पावकेन । भास्वद्ग्रावोद्गतेन भास्वतो ग्रावाणो भास्वद्ग्रावाणोऽर्कोपलाः सूर्यकान्ताभिधाना मणिविशेषास्तेभ्य उद्गतो भास्वद्ग्रावोद्गतः । ते हि रविकरस्पृष्टा अग्निमुद्वमन्ति । ओषधिशब्देनौषधिस्थं तेज उच्यते । तात्स्थ्यात् । यथा गिरिर्दह्यते पन्थानो मुष्यन्त इति । तत्तिरस्कुर्वन्नभिभवन् । ओषधीनामीश ओषधीशः । तस्मिन्नोषधीनां भर्तरीन्दौ मुषितरुचि मुषिता रुग्यस्य स तस्मिन्मुषितरुचि हृतभासि शुचेव शोकेनेव प्रोषिताभाः प्रोषिता आभा यासामोषधीनां तास्तथोक्ताः । भर्तरि हततेजसि पत्न्यः शोकेन गतधृतयो भवन्ति । प्रातरद्रेरुदयाचलनाम्नो दृषदः शिला दर्शयन्प्रकटयन् । कथंभूता इव । पक्षच्छेदव्रणासृक्स्रुत इव । पक्षाणां छेदः पक्षच्छेदस्तेन व्रणास्तेषामसृग्रुधिरं पक्षच्छेदव्रणासृक् तत्स्रवन्तीति ताः । अङ्गरुहक्षतजस्राविणीर्येया । यतो गभस्त्युद्गम आताम्रो लोहितोऽतस्तदनुरञ्जिताः शिला एवमुत्प्रेक्ष्यन्ते । पूर्वं किल पर्वताः पक्षवन्तोऽभूवंस्तेषामिन्द्रस्तांश्चिच्छेद ॥

शीर्णघ्राणाङ्घ्रिपाणीन्व्रणिभिरपघनैर्घर्घराव्यक्तघोषा-
न्दीर्घाघ्रातानघौघैः पुनरपि घटयत्येक उल्लाघयन्यः ।
घर्मांशोस्तस्य वोऽन्तर्द्विगुणघनघृणानिघ्ननिर्विघ्नवृत्ते-
र्दत्तार्घाः सिद्धसंघैर्विदधतु घृणयः शीघ्रमंहोविघातम् ॥ ६ ॥

घर्मांशोरादित्यस्य घृणयो मयूखा वो युष्माकमंहोविघातं पापापनोदं विदधतु कुर्वन्तु । शीघ्रं तत्क्षणम् । किंविशिष्टाः । दत्तार्घा दत्तो विश्राणितोऽर्घो येभ्यस्ते । कैः । सिद्धसंघैः सिद्धा अणिमादियुक्तास्तेषां संघा व्रातास्तैरिति । किंभूतोऽसौ घर्मांशुः । यः पुनरपि भूयोऽपि घटयति करोति । कान् । शीर्णघ्राणाङ्घ्रिपाणीन् । घ्राणं नासा । अङ्घ्री पादौ । पाणी हस्तौ । घ्राणं चाङ्घ्री च पाणी चेति समाहारद्वन्द्वः । शीर्णा घ्राणाङ्घ्रिपाणयो येषां सामर्थ्यादङ्गिनां ते तथोक्तान् । तथा अपघनैरङ्गैर्व्रणिभिरुपलक्षितान् । घर्घराव्यक्तघोषान् घर्घरो जर्जरोऽव्यक्तोऽस्फुटो घोषो ध्वनिर्येषाम् । घ्राणादिलुप्ततायां कण्ठोष्ठादिम्रणितायां च कारणमुपवर्णयन्नाह—अघौघैः पापसमूहैर्दीर्घाघ्रातांश्चिरतरग्रस्तान् । किं कुर्वन् । उल्लाघयन्निर्व्याधीकुर्वन् । एकोऽसहायः । रुद्रादयोऽपि सूर्यमूर्तिमाश्रित्य एव नीरोगं कुर्वन्तीति संबन्धः (भावः) । किंभूतस्य भानोः । अन्तर्द्विगुणघनघृणानिघ्ननिर्विघ्नवृत्तेः । अन्तर्मध्ये चेतसि द्विगुणा घना बहुला घृणा दया । घना चासौ

घृणा च घनघृणा । अन्तर्द्विगुणा चासौ घनघृणा च तया निघ्ना परवशा निर्विघ्ना अन्तरायरहिता वृत्तिर्यस्य स तयोक्तः ॥

विभ्राणा वामनत्वं प्रथममथ तथैवांशवः प्रांशवो वः
क्रान्ताकाशान्तरालास्तदनु दशदिशः पूरयन्तस्ततोऽपि ।
ध्वान्तादाच्छिद्य देवद्विष इव बलितो विश्वमाश्वश्नुवानाः
कृच्छ्राण्युच्छ्रायहेलोपहसितहरयो हारिदश्वा हरन्तु ॥ ७ ॥

हारिदश्वाः सूर्यसंबन्धिनोऽशवो रश्मयो वो युष्माकं कृच्छ्राणि दुःखानि हरन्त्वपनयन्तु । पुनर्विशेष्यन्ते—उच्छ्रायहेलोपहसितहरयः । उच्छ्राय उच्चैस्त्वं तस्य या हेला लीला तया उपहसितो विडम्बितस्त्वत्तोऽधिको देशोऽस्मादिति (?) हसितो हरिर्विष्णुर्यैस्ते । प्रारब्धविक्रमस्य विष्णोः सदृशा इति तात्पर्यार्थः । किं कुर्वाणाः । बिभ्राणा धारयन्तः । किम् । वामनत्वं खर्वत्वम् । प्रथममादौ । अथानन्तरं प्रांशवो दीर्घास्तथैव यथा भगवान्नारायणः प्रथमं विक्रमकाले वामनत्वं कृत्वा प्रांशुर्दीर्घः संजातः । पुनरपि किंभूताः । क्रान्ताकाशान्तरालाः । क्रान्तं व्याप्तमाकाशान्तरालमम्बरमध्यं यैस्ते तथोक्ताः । तदनु अनन्तरं च दश दिशो दशाशाः पूरयन्तः पूर्णाः कुर्वन्तः । ततोऽपि पुनरपि विश्वं जगदश्नुवाना व्याप्नुवन्तः । आशु शीघ्रम् । किं कृत्वा । आच्छिद्याकृष्यापहृत्य । कुतः । ध्वान्तादन्धकारात् । कस्मादिव । देवद्विष इव सुरशत्रोरिव । बलितो बलिनाम्नः, अन्यत्र बलितो बलवतः । पञ्चम्यन्तादुभयस्मात्तस् । विष्णोरेतत्संबन्धनीयम् । सोऽपि वामनो भूत्वा प्रांशुरभूत् । तदनु च क्रान्तगगनान्तरालः । ततः परिपूरितदशदिशो बलेर्विश्वमाच्छिद्य व्याप्तवानिति ॥

उद्गाढेनारुणिम्ना विदधति बहुलं येऽरुणस्यारुणत्वं
मूर्धोद्धूतौ खलीनक्षतरुधिररुचो ये रथाश्वाननेषु ।
शैलानां शेखरत्वं श्रितशिखरिशिखास्तन्वते ये दिशन्तु
प्रेङ्खन्तः खे खरांशोः खचितदिनमुखास्ते मयूखाः सुखं वः ॥ ८ ॥

ते मयूखा रश्मयः खरांशोः सवितुः संबन्धिनो वो युष्मभ्यं सुखं शर्म दिशन्तु ददतु । येऽरुणस्य सारथेररुणत्वं लोहितत्वं बहुलं घनं विदधति कुर्वन्ति । केन । अरुणिम्ना लोहितत्वेन । उद्गाढेन प्रबलेन । रथाश्वाननेषु स्यन्दनतुरगवक्त्रेषु खलीनक्षतरुधिररुचः खविकासणशोणितच्छायाः । मूर्धोद्धूतौ सत्यां मस्तकोत्कम्पे सति । ये शैलानां पर्वतानां शेखरत्वं मुकुटत्वं तन्वते विस्तारयन्ति । किंभूताः । श्रितशिखरिशिखाः सन्तः समा-

1. 'देवद्रुहः' इति कस्यचित्पाठः. 2. 'श्रितगिरिशिखराग्राः' इति कस्यचित्पाठः, 'आश्रितशृङ्गकोटयः सन्तः' इति तद्व्याख्यानं च.

श्रितपर्वताग्रभागाः । अथवा श्रिताः शिखरिण्यः शिखा यैस्ते । किं कुर्वन्तः । प्रेङ्खन्तो गच्छन्तः । क । खे व्योम्नि । खचितदिनमुखाः स्पष्टीकृतदिवसप्रारम्भाः ॥

दत्तानन्दाः प्रजानां समुचितसमयाक्लिष्टसृष्टैः पयोभिः
पूर्वाह्णे विप्रकीर्णा दिशि दिशि विरमत्यह्नि संहारभाजः ।
दीप्तांशोर्दीर्घदुःखप्रभवभवभयोदन्वदुत्तारनावो
गावो वः पावनानां परमपरिमितां प्रीतिमुत्पादयन्तु ॥ ९ ॥

दीप्तांशोरादित्यस्य संबन्धिन्यो गावो दीधितयो वो युष्माकं प्रीतिं सुखमुत्पादयन्तु जनयन्तु । किंभूताः । दत्तानन्दाः दत्तो वितीर्ण आनन्दो याभिस्ताः । कासाम् । प्रजानां लोकानाम् । कैः कृत्वा । पयोभिर्जलैः । समुचितसमयाक्लिष्टसृष्टैः समुचितो योग्यः समयः कालस्तत्राक्लिष्टसृष्टैः । भूयोऽपि विशेष्यन्ते—पूर्वाह्णे विप्रकीर्णाः अह्नः पूर्वो भागस्तत्र विक्षिप्ताः । क । दिशि दिशि सर्वासु दिक्षु । विरमत्यह्नि याति दिवसेऽस्तमनसमये संहारभाजः संहृतिमाश्रिताः । पुनरपि किंभूताः । दीर्घदुःखप्रभवभवभयोदन्वदुत्तारनावः । दीर्घं च तद्दुःखं च तस्य प्रभव उत्पत्तिस्थानं स चासौ भवश्च संसारस्तस्माद्भयं तदेवोदन्वान्समुद्रस्तस्मादुत्तारस्तत्र नावो यानपात्राणि । पावनानां पावकानां परमुत्कृष्टम् । किंभूतां प्रीतिम् । अपरिमितामपर्यन्ताम् । गाव इति श्लिष्टमेतदभिन्नम् । गावो धेनवश्चोच्यन्ते । ता अपि पयोभिर्दुग्धैः समुचितसमयाक्लिष्टसृष्टैः प्रजानां दत्तानन्दा भवन्ति । पूर्वाह्णे प्रत्युषसि विप्रकीर्णा भवन्ति । अह्नोऽवसाने संहारभाजः । दीर्घदुःखप्रभवभवभयोदन्वदुत्तारनावश्च दत्ताः सत्यः सद्यः । तदीयैः पयोभिर्विप्राग्नितर्पणैर्लोकाः संसारं तरन्तीत्यागमविदः ॥

बन्धध्वंसैकहेतुं शिरसि नतिरसाबद्धसंध्याञ्जलीनां
लोकानां ये प्रबोधं विदधति विपुलाम्भोजखण्डाशयेव ।
युष्माकं ते स्वचित्तप्रथितपृथुतरप्रार्थनाकल्पवृक्षाः
कल्पन्तां निर्विकल्पं दिनकरकिरणाः केतवः कल्मषस्य ॥ १० ॥

दिनकरकिरणा रविपादा भवतां कल्मषस्य पापस्य केतवो विनाशकाः कल्पन्तां संपद्यन्ताम् । निर्विकल्पमसंशयम् । क्रियाविशेषणमिदम् । स्वं च चित्तं च स्वचित्तं तस्य प्रथिता पृथुतरा पृथ्वी सा चासौ प्रार्थना च तस्याः कल्पवृक्षाः । ये लोकानां प्रजानां प्रबोधं तत्त्वज्ञानं विदधति कुर्वन्ति । बन्धस्त्रिविधः—प्राकृतो वैकारिको दक्षिणाला(?) ख्यश्चेति । तेन हि बद्धा देहिनो न मुच्यन्ते । तस्य ध्वंसो नाशस्तत्रैकहेतुः

---

१. 'अक्लिष्टस्पृष्टैः' इति पाठः, 'समुचिते योग्ये समये वर्षाख्ये अक्लिष्टमयाच्ञया' इति वल्लभव्याख्या. २. 'प्रथिमपृथुतर' इति पाठः, 'स्वं भवतां यच्चित्तं तस्य यः प्रथिमा विस्तारस्तद्वत्' इति वल्लभव्याख्या.

प्रधानं कारणम् । किंभूतानां प्रजानाम् । शिरसि मस्तके नतिर्नमस्कारस्तत्र रसस्तेनाद-
द्धो विरचितः संध्याञ्जलिर्यैस्ते तथोक्तास्तेषाम् । कयेव । विपुलाम्भोजखण्डाशयेव ।
विपुलो विस्तीर्णोऽम्भोजखण्डः कमलाकरः । विपुलश्चासावम्भोजखण्डश्च तस्याशा तये-
व । बन्धध्वंसैकहेतुतापि मुकुलावस्थाविघातककारणता । प्रबोधो ज्ञानं विकासश्च ॥

धारा रायो धनायापदि सपदि करालम्बभूताः प्रपाते
तत्त्वालोकैकदीपास्त्रिदशपतिपुरप्रस्थितौ वीथ्य एव ।
निर्वाणोद्योगियोगिप्रगमनिजतनुद्वारि वेत्रायमाणा-
स्त्रायन्तां तीव्रभानोर्दिवसमुखसुखा रश्मयः कल्मषाद्वः ॥ ११ ॥

तीव्रभानोरादित्यस्य मयूखाः कल्मषात्पापाद्वो युष्मांस्त्रायन्तां रक्षन्तु । दिवसमुख-
सुखाः दिवसारम्भे सुखकारिणः । स्वरूपकथनमेतत् । पुनरपि च निरूप्यन्ते—
रायो द्रव्यस्य धाराः प्रपाताः । क्व । धनायापदि द्रव्यार्थकायपीडायाम् । धनाया ध-
नेच्छा तस्या आपत्प्रार्थना धनस्य प्राप्तिस्तत्रापि । सपदि तत्क्षणम् । करालम्बभूता
इति हस्तेष्वादायोत्तारयन्तीत्यर्थः । क्व । प्रपाते नरके दुर्गतौ । तत्त्वालोकैकदीपाः त-
त्त्वस्य परमार्थस्यालोके दर्शने एकदीपाः प्रकाशकत्वात् । त्रिदशपतिरिन्द्रस्तस्य पुरं न-
गरममरावती तत्र प्रस्थितिः प्रस्थानं तत्र वीथ्य एव पन्थान एव । पुनरपि कीदृशाः ।
निर्वाणोद्योगिनो मोक्षोत्सुकास्ते च ते योगिनश्च तेषां प्रगमोऽपुनरावृत्तिस्तस्य निजा
आत्मीया सा चासौ तनुश्च तस्या द्वार्द्वारं तस्यां वेत्रायमाणाः प्रतीहारा इवाचरन्तः । ये
हि सिद्धा योगिनो भवन्ति ते हि सूर्यतनुद्वारेण न स्खलनमासादयन्ति । अयुक्तानां
योगिनां तु सूर्यतनुद्वाः तत्र द्वाःस्थाः प्रयातुं न ददति । अथवा प्रगच्छन्त्यनेनेति प्रगमः
पन्थाः । निर्वाणोद्योगियोगिनां प्रगमश्चासौ निजतनुद्वाश्चेति तत्समासः ॥

प्राचि प्रागाचरन्त्योऽनतिचिरमचले चारुचूडामणित्वं
मुञ्चन्त्यो रोचनाम्भः प्रचुरमिव दिशामुच्चकैश्चर्चनाय ।
चाटूत्कैश्चक्रनाम्नां चतुरमविचलैर्लोचनैरर्च्यमाना-
श्चेष्टन्तां चिन्तितानामुचितमचरमाश्चण्डरोचीरुचो वः ॥ १२ ॥

चण्डरोचीरुचो घर्मघृणिपादाश्चिन्तितानां मनोरथानामुचितं योग्यं वो युष्माकं चे-
ष्टन्तां व्याप्रियन्तां संपादयन्तु वा । किं कुर्वन्त्यः । आचरन्त्यो विदधत्यः । किं तत् । चा-
रुचूडामणित्वं मनोहरशिखारत्नत्वम् । क्व । अचले पर्वते । किंभूते । प्राचि पूर्वदिक्संब-
न्धिनि । प्राक्प्रथमम् । अनतिचिरं स्वल्पकालम् । किंभूताः । रोचनाम्भो रोचनाजलं
मुञ्चन्त्य इव । प्रचुरं प्रभूतम् । दिशामाशानां चर्चनाय भूषणाय । तादर्थ्ये चतुर्थी । उच्च-
कैरत्यर्थम् । प्रथममतिलोहितत्वाच्चण्डांशुरोचिषः शिरोरत्न[illegible] । ननु किंभूताः

१. 'तीव्रभासः' इति पाठः. २. 'कल्मषाद्वः' इति पाठः. ३. 'मुञ्चन्त्यो' इति पाठः.

सन्नो रोचनाम्बुत्वेनेति । पुनः किंभूताः। अर्च्यमानाः सस्पृहमीक्ष्यमाणाः । कैः । चक्रनाम्नां लोचनाञ्चलैर्नेत्रप्रान्तैः । अविचलैर्निश्चलैः । कथम्। चतुरं विदग्धं यथा भवति । चाटूत्कैश्चाटुकाङ्क्षिभिः । चक्रवाकाणां हि भगवति गभस्तिमालिन्यभ्युदिते सति वियुक्तानां परस्परं समागमो भवतीति सादरं तद्रुचोऽर्च्यन्त इत्येवमभिहितम् । अचरमा अप्राचीनाः ॥

एकं ज्योतिर्दृशौ द्वे त्रिजगति गदितान्यब्जजास्यैश्चतुर्भि-
भूतानां पञ्चमं यान्यलमृतुषु तथा षट्सु नानाविधानि ।
युष्माकं तानि सप्तत्रिदशमुनिनुतान्यष्टदिग्भाञ्जि भानो-
र्यान्ति प्राह्णे नवत्वं दश दधतु शिवं दीधितीनां शतानि ॥ १३ ॥

भानोः संबन्धीनि दीधितीनां दश शतानि सहस्रमिति यावत् । युष्माकं शिवं भद्रं दधतु पुष्णन्तु कुर्वन्तु वा । अनेकार्थत्वाद्धातूनामिति । किंभूतानीत्याह—यानि एकं ज्योतिरेकं तेजः प्रधानमालोककारणम् । पुनरपि कीदृशानि, दृशौ द्वे चक्षुषी द्वे । त्रिजगति त्रैलोक्ये गदितानि कथितानि । कैः, अब्जजास्यैः कमलयोनिवदनैः । कियद्भिः, चतुर्भिश्चतुःसंख्योपेतैः । भूतानां पृथिव्यादीनां पञ्चमम् । पञ्चानां भूतानां तेजसि सति पञ्च संख्या संपद्यते । तथा ऋतुषु वसन्तादिषु षट्स्वलमत्यर्थं नानाविधान्युच्चावचप्रकाराणि । तीव्रमन्दादिभेदेन भिद्यमानत्वात् । पुनरपि किंभूतानि । सप्तत्रिदशमुनिनुतानि त्रिदशमुनयो देवर्षयोऽत्रिप्रभृतयः सप्त च ते त्रिदशमुनयश्च तैर्नुतानि । भूयोऽपि किंभूतानि । अष्टदिग्भाञ्जि अष्टाशाश्रितानि । पूर्वाह्णे दिनमुखे नवत्वं प्रत्यग्रत्वं यान्ति भजन्ते । पूर्वं ज्योतिस्त्वेनैकत्वम् । पुनर्दृक्त्वेन द्वित्वम् । भुवनत्वेन त्रित्वम् । चतुर्षु ब्रह्मवक्रेषु चतुःसंख्यात्वम् । पृथिव्यादिरूपतया पञ्चधा । वसन्तादिसंख्यायाः षट्त्वम् । अत्रिप्रभृतिभिः सप्तत्वम् । तीव्रमन्दादिभेदेन नानात्वम् । अष्टदिग्भाक्त्वेनाष्टत्वम् । आश्रयभेदाद्भेदः । पूर्वाह्णे नवत्वमिति शब्दसाम्यान्नवत्वं नवसंख्यायोगिता प्रदर्शितेति ॥

आवृत्तिभ्रान्तविश्वाः श्रममिव दधतः शोषिणः स्वोष्मणेव
ग्रीष्मे दावाग्नितप्ता इव रसमसकृद्ये धरित्र्या धयन्ति ।
ते प्रावृष्यात्तपानातिशयरुज इवोद्वान्ततोया हिमर्तौ
मार्तण्डस्याप्रचण्डाश्चिरमशुभभिदेऽभीशवो वो भवन्तु ॥ १४ ॥

मार्तण्डस्य भानोरभीशवो दीधितयो वो युष्माकमशुभभिदेऽकल्याणविनाशाय भवन्तु जायन्ताम् । चिरं बहुकालम् । किंविशिष्टाः । ये धरित्र्या भुवो रसं जलं धयन्ति पिबन्ति । असकृदनेकवारम् । किंभूता इव धयन्ति । शोषिण इव शोषयुक्ता इव ।

---

१. 'ददतु' इति पाठः.

शोषिणोऽपि श्रममिव दधतः खेदमिव दधाना बिभ्राणाः । श्रमाधाने हेतुमाह—आवृ-त्तिश्रान्तविश्वाः । आवृत्त्या पौनःपुन्येन श्रान्तं पर्यटितं विश्वं जगद्यैस्ते तथोक्ताः । क्व । ग्रीष्मे निदाघकाले । शोषिणः स्वोष्मणैव । पुनरुत्प्रेक्षते—दावाग्नितप्ता इव, जल-मतीव नरा धयन्ति तद्वदेते इत्युत्प्रेक्षिताः । तेऽभीशवः प्रावृषि वर्षाकाले उद्वान्ततोया उद्गीर्णपयस्काः । किंभूताः । आत्तपानातिशयरुज इव आत्ता प्राप्ता पानातिशयरु-ग्यैस्ते । हिमर्तौ हेमन्तेऽप्रचण्डा मन्दा अपटवः । यथा कोऽपि पानीयपानातिशयात्मा-सवेदनो मन्दो भवति तद्वदेतेऽपि ॥

तन्वाना दिग्वधूनां समधिकमधुरालोकरम्यामवस्था-
मारूढप्रौढिलेशोत्कलितकपिलिमालंकृतिः केवलैव ।
उज्जृम्भाम्भोजनेत्रद्युतिनि दिनमुखे किंचिदुद्भिद्यमाना
श्मश्रुश्रेणीव भासां दिशतु दशशती शर्म घर्मत्विषो वः ॥ १५ ॥

भासां दीधितीनां दशशती घर्मत्विषः सूर्यसंबन्धिनी वो युष्मभ्यं शर्म सुखं कल्याणं दिशतु यच्छतु । केव । श्मश्रुश्रेणीव, मुखरोमराजिरिव । किं कुर्वती । किंचिदुद्भिद्यमाना उद्गच्छन्ती । कस्मिन् । दिनमुखे । अन्यत्र यूनां मुखे उद्भिद्यते । किं कुर्वाणा । तन्वाना विस्तारयन्ती । काम् । अवस्थाम् । कासाम् । दिग्वधूनाम् । दिश एव वध्वस्तासाम् । कीदृशीम् । समधिकमधुरालोकरम्याम् । समधिकः सम्यगधिको मधुरो मृदुर्य आलोकः प्रकाशस्तेन रम्याम् । पुनरपि किंभूता । आरूढप्रौढिलेशोत्कलितकपिलिमा । प्रौढिः प्रौढत्वं तस्या लेशः आरूढश्चासौ प्रौढिलेशश्चेति समासः । तेनोत्कलितो वर्धितः क-पिलिमा कपिलत्वं यस्याः सा तथोक्ता । अलंकृतिर्भूषणम् । केवलैव एकैव । किंभूते दिनमुखे । उज्जृम्भा विकासिन्यम्भोजनेत्रद्युतिर्यत्र तत्तथोक्तं तस्मिन्निति । श्मश्रुश्रेण्या अपि सर्वमेतत्संबन्धनीयम् । सापि वधूनां समधिकमधुरामालोकरम्यामवस्थां वितनुते । आ-रूढप्रौढिलेशोत्कलितकपिलिमा भवति । अलंकृतिश्चासौ केवलैव मुखस्य संपद्यत इ-त्यादि समानम् ॥

मौलीन्दोर्मैष मोषीद्द्युतिमिति वृषभाङ्केन यः शङ्किनेव
प्रत्यग्रोद्घाटिताम्भोरुहकुहरगुहासुस्थितेनेव धात्रा ।
कृष्णेन ध्वान्तकृष्णस्वतनुपरिभवत्रस्नुनेव स्तुतोऽलं
त्राणाय स्तात्तनीयानपि तिमिररिपोः स त्विषामुद्गमो वः ॥ १६ ॥

तिमिररिपोरादित्यस्य स त्विषां भासामुद्गम उदयस्त्राणाय रक्षायै वो युष्माकं स्ताद्भ-वतात् । तनीयानपि तनुतरोऽपि । किंभूतः । यः स्तुतः । केन । वृषभाङ्केन शिवाङ्किना । शङ्किनेव । किमिति । मौलीन्दोर्मौलिचन्द्रस्यैषोऽयं द्युतिं प्रभां मा मोषीन्मा [illegible]-दिति । धात्रा ब्रह्मणा च यः स्तुत इति संबन्धः । किंभूतेन पुनः । प्रत्यग्रेति । सद्यः-

विकासिसरोरुहान्तरालसुखोपविष्टेनेव । मा संकोचदुःस्थितिं कामपि कार्षीदितीव । तथा कृष्णेन विष्णुना ध्वान्तकृष्णस्वतनुपरिभवत्रसुनेव तिमिरश्यामनिजशरीरपरिभूतित्रसनशीलेनेव । अलमत्यर्थम् । इवशब्दः सर्वत्रोत्प्रेक्षायाम् । एव ध्वान्तभ्रान्त्या ममैव तनुं परिभूयादितीव । आद्यैरपि देवैः स्तुत इति महत्त्वं रवेर्दर्शयति ॥

विस्तीर्णं व्योम दीर्घाः सपदि दश दिशो व्यस्तवेलाम्भसोऽब्धी-
न्कुर्वद्भिर्दृश्यनानानगनगरनगाभोगपृथ्वीं च पृथ्वीम् ।
पद्मिन्युच्छ्वास्यते यैरुषसि जगदपि ध्वंसयित्वा तमिस्रा-
मुस्रा विस्रंसयन्तु द्रुतमनभिमतं ते सहस्रत्विषो वः ॥ १७ ॥

ते सहस्रत्विषः सहस्ररश्मेरुस्रा गभस्तयोऽनभिमतं दुःखं विस्रंसयन्तु ध्वंसयन्तु । वो युष्माकम् । द्रुतं शीघ्रम् । यैः पद्मिनी जगच्चोषसि प्रातःकाले उच्छ्वास्यते । ध्वंसयित्वा । काम् । तमिस्रामन्धकारं रात्रिं वा । किं कुर्वद्भिः । विस्तीर्णं पृथुलं व्योम गगनम्, दीर्घा आयता दश दिशो दशाशाः, सपदि तत्क्षणं व्यस्तवेलाम्भसोऽब्धीन् विक्षिप्तवेलाजलान्समुद्रान्कुर्वद्भिः । पृथ्वीं च धरां कुर्वद्भिः । कथंभूताम् । दृश्यनानानगनगरनगाभोगपृथ्वीम् । नगाः पर्वताः नगराणि पत्तनानि नगा वृक्षास्ते च ते नानाप्रकाराश्चेति समासः। दृश्या उपलभ्याः । दृश्याश्च ते नानानगनगरनगास्तेषामाभोगो विस्तारस्तेन पृथ्वीं विस्तीर्णाम् ॥

अस्तव्यस्तत्वशून्यो निजरुचिरनिशानश्वरः कर्तुमीशो
विश्वं वेश्मेव दीपः प्रतिहततिमिरं यः प्रदेशस्थितोऽपि ।
दिक्कालापेक्षयासौ त्रिभुवनमटतस्तिग्मभानोर्नवाख्यां
यातः शातक्रतव्यां दिशि दिशतु शिवं सोऽर्चिषामुद्गमो वः॥ १८॥[2]

तिग्मभानोरादित्यस्यार्चिषां भासामुद्गम उदयो वो युष्मभ्यं शिवं कल्याणं दिशतु यच्छतु । किंविशिष्टोऽसौ । विश्वं जगत्प्रतिहततिमिरं कर्तुमीशः । एकदेशस्थितोऽप्येकदेशे वर्तमानोऽपि । एकदेशस्थितस्यापि तिमिरोच्छेदकारित्वं प्रदीपेन समानो धर्मः । प्रदीपो वेश्मेव । सामान्यदीपात्किंचिदधिकोऽयम् । अस्तव्यस्तत्वशून्यः । अस्तो विनाशस्तेन व्यस्तत्वं व्यसनं तेन शून्यो न भवति । विनाशे नासौ बाध्यते । निजरुचिश्च न भवति । किं त्वनिजरुचिः । तैलादिना आधीयमानत्वात् । तथा अनिशा दिवसस्तत्र नश्वरोऽसौ । अस्तव्यस्तत्वशून्य इति । न स्तव्योऽस्तव्योऽस्तवार्हः । तथा तत्त्वशून्यश्च प्रदीपः । अर्चिषामुद्गमस्तु स्तव्यस्तत्त्वभूतश्चेति । किंभूतः । नवाख्यां प्रलयव्यपदेशं यातो गत इति । क । दिशि ककुभि । किंभूतायाम् । शातक्रतव्यां पौरन्दर्याम् । तथा दि-

१. 'विलासयन्तु' इति पाठः. २. वल्लभदेवटीकायामस्माच्छ्लोकादनन्तरम् 'इति र-श्मिवर्णनम्' इत्यस्ति.

कालापेक्षया दिक् प्राच्यादिः कालः पूर्वाह्नादिः प्राच्यां दिशि पूर्वाह्ने दृश्यत इति नव उच्यते । परमार्थतस्त्वनवः पुराणः व्यपदेशशून्योऽसौ । तिग्ममानोस्त्रिभुवनमटतो गच्छतोऽतिक्रामतः ॥

मा गान्म्लानिं मृणालीमृदुरिति दययेवाप्रविष्टोऽहिलोकं
लोकालोकस्य पार्श्वं प्रतपति न परं यस्तदाख्यार्थमेव ।
ऊर्ध्वं ब्रह्माण्डखण्डस्फुटनभयपरित्यक्तदैर्घ्यो द्युसीम्नि
स्वेच्छावश्यावकाशावधिरवतु स वस्तापनो रोचिरोघः ॥ १९ ॥

रोचिषामोघो रोचिरोघो दीप्तिपुञ्जः । स तापनः सूर्यसंबन्धी मयूखव्रातो वो युष्मानवतु रक्षतु । किंभूतः । यो न प्रविष्टोऽहिलोकं फणिसद्म । किमिति । मा गान्मा यासीदिति म्लानिं पीडामयमहिलोको मृणालीकोमलः । ततो यद्यहं पातालं गच्छेयं तदा नूनमयं म्लानिं यास्यतीति । दयया कृपया । लोकालोकस्य परं पार्श्वं तदाख्यार्थमेव तत्संज्ञार्थमेव न प्रतपति न प्रकाशयति । तस्य हि लोकालोकसंबन्धात्तदभावाच्च लोकश्च स आलोकश्च सः । अर्वाचीने पार्श्वे यत्र भगवान्प्रतपति तत्र लोका विद्यन्ते नापरत्र । यदि तत्रापि भगवान्प्रतपति तदा सोऽपि लोक एव स्यात् । तदा लोकालोक इत्याख्या तस्य नश्येत् । अनेन कारणेन तस्य परं पार्श्वं न प्रतपति । ऊर्ध्वमुपरिष्टाद्ब्रह्माण्डखण्डस्फुटनभयपरित्यक्तदैर्घ्यः । ब्रह्माण्डखण्डस्य स्फुटनं दलनं तस्माद्भयं तेन परित्यक्तं दैर्घ्यं द्राघिमा येन स तथोक्तः । क्व । द्युसीम्नि गगनमर्यादायाम् । दिवः सीमा द्युसीमा तस्मिन् । किंविशिष्टः । स्वेच्छावश्यावकाशावधिः । स्वेच्छावश्यो वशंगतोऽवकाशावधिः स्थानमर्यादा यस्य सः ॥

अश्यामः काल एको न भवति भुवनान्तोऽपि [1]वीतेऽन्धकारे
सद्यः प्रालेयपादो न विलयमचलश्चन्द्रमा अप्युपैति ।
बन्धः सिद्धाञ्जलीनां न हि कुमुदवनस्यापि यत्रोज्जिहाने
तत्प्रातः प्रेक्षणीयं दिशतु दिनपतेर्धाम कामाधिकं वः ॥ २० ॥

दिनपतेरादित्यस्य तद्धाम तत्तेजो वो युष्मभ्यं कामाधिकमभिलाषाधिकं दिशतु यच्छतु । कामाधिकं सामर्थ्यात्प्रस्तावात्प्रार्थितमेव । यत्र यस्मिन्धाम्न्युज्जिहाने उद्गच्छति सति न खल्वहर्लक्षणः काल एवाश्यामो भवति अपि तु भुवनान्तोऽपि । कालश्यामत्वं श्यामा रात्रिस्तद्रहितत्वम् । न विद्यते श्यामास्मिन्निति कृत्वा । नियतमहर्लक्षणः कालो भवति तस्य रात्र्या सहानवस्थानलक्षणो विरोध इत्यर्थः । भुवनान्तः पुनः श्यामगुणरहितः । कालिमरहितः । अन्धकारे तमसि वीते विगते सति । 'वीतान्धकारः' इति पाठान्तरम् । तत्र वीतं गतमन्धकारं यस्मात्तत्कालादीनि विशेषणम् ।

1. 'वीतान्धकारः' इति पाठः.

किं च स व्यक्तलक्षणः प्रालेयपादो हिमप्रधानप्रत्यन्तनगोऽचलः पर्वत एव न विलयमेति न विलीयते द्रवति अपि तु चन्द्रमा अपि विलयमेति म्लानिं विच्छायतां याति । प्रालेयपादो हिमकिरणश्चन्द्रमा अपि । बन्धो मुकुलभावो न हि सिद्धाञ्जलीनामेव । सिद्धा देवविशेषाः । अञ्जलय उभयकराविन्यासः । तेषां बन्धो रचना । सिद्धा हि भगवन्तमुपतिष्ठमाना अञ्जलीन्विदधति । न हि सिद्धाञ्जलीनां बन्धो भवति, अपि तु कुमुदवनस्यापि । कुमुदान्यपि तस्मिन्काले मीलन्ति संकोचं यान्ति । प्रातः प्रभाते । कीदृशं तद्धाम । प्रेक्षणीयं प्रेक्षणार्हं रमणीयमिति ॥

यत्कान्तिं पङ्कजानां न हरति कुरुते प्रत्युताधिक्यरम्यां
नो[1] धत्ते तारकाभां तिरयति नितरामाशु यन्नित्यमेव ।
कर्तुं नालं निमेषं दिवसमपि परं यत्तदेकं त्रिलोक्या-
श्चक्षुः सामान्यचक्षुर्विसदृशमघभिद्भास्वतस्तान्महो वः ॥ २१ ॥

भास्वतो रवेस्तन्महस्तत्तेजो वो युष्माकमघभित्पापविनाशि स्ताद्भवतु । किंभूतम् । त्रिलोक्या लोकत्रयस्यैकमद्वितीयं चक्षुर्लोचनमिव । किंविशिष्टम् । सामान्यचक्षुर्विसदृशं प्राकृतलोचनविलक्षणम् । तदेव वैलक्षण्यं दर्शयति—यत्कान्तिं पङ्कजानां पद्मानां न हरति न च्छिनत्ति प्रत्युत विशेषेणाधिक्यरम्यामतिशयरमणीयां महत्प्रभां कुरुते । इतरत्तु चक्षुः कान्तिं पङ्कजानामादत्ते तदनुकारं किल तद्भवतीति । तथा नो धत्ते न पुष्णाति । तारकाभां नक्षत्रद्युतिम् । तिरयति तिरस्करोति । नितरामतीव । आशु शीघ्रम् । नित्यमेव सदैव । इतरत्तु तारका कनीनिका तया आभां शोभां धत्ते पुष्णाति । निमेषं कालविशेषं कर्तुमुत्पादयितुमेव नालं समर्थम्, किं तु दिवसमपि । परमुत्कृष्टमेव । इतरत्तु मुहूर्तमपि निर्निमेषं न भवतीति व्यतिरेकः ॥

क्ष्मां क्षेपीयः क्षपाम्भःशिशिरतरजलस्पर्शतर्षादृतेव
द्रागाशा नेतुमाशाद्विरदकरसरःपुष्कराणीव बोधम् ।
प्रातः प्रोल्लङ्घ्य विष्णोः पदमपि घृणयेवातिवेगाद्दवीय-
स्युद्दामं द्योतमाना दहतु दिनपतेर्दुर्निमित्तं द्युतिर्वः ॥ २२ ॥

दिनपतेर्भास्वतो द्युतिर्दीप्तिर्वो युष्माकं दुर्निमित्तमशुभं दहतु भस्मीकरोतु । किं कुर्वती । उद्दामं द्योतमाना । किंभूता । क्ष्मां पृथ्वीमृता गता प्राप्ता । 'ऋ गतौ' । क्षेपीयः क्षिप्रतरम् । कस्मादिव । क्षपाम्भःशिशिरतरजलस्पर्शतर्षादिव । क्षपाम्भोऽवश्यायजलं तेन शिशिरतरं शीतलतरं च तज्जलं च तस्य स्पर्शस्तत्र तर्षोऽभिलाषस्तस्मादिवेत्युत्प्रेक्षा । पुनरपि किंभूता । आशा दिशः ऋतेति संबन्धः । द्राक् शीघ्रम् । किं कर्तुमिव ।

---

१. 'नाधत्ते' इति पाठः. २. 'तल' इति पाठः, 'निशाजलातिशीतलभूपृष्ठसंपर्काभिलाषात्' इति वल्लभव्याख्यानम्.

नेतुमिव प्रापयितुमिव । कम् । बोधं विकासम् । कानि । आशाद्विरदकरसरःपुष्कराणि । आशासु द्विरदा दिग्गजास्तेषां करा हस्तास्ते सरांसीव त एव वा सरांसि पुष्कराधारत्वात् । तेषां पुष्कराणि कराग्राणि पद्मान्यप्युच्यन्ते । तानि हि विकासवन्तीत्येवमुक्तम् । प्रातः प्रत्युषसि प्रोल्लङ्घ्यातिक्रम्य विष्णोश्चक्रिणः पदं व्योम । घृणयेव जुगुप्सयेव । त्रिपदीकाले विष्णुना व्याप्तं तन्महतामयुक्तमेतावन्मात्राणां पदानां हरणमिति । परपदे किल स्थातुं न युक्तमित्यतिवेगादतिरंहसो दवीयसि दूरतरे कृतेति संबन्धः । उद्दामं प्रभूतम् । क्रियाविशेषणं वा ॥

नो कल्पापायवायोरदयरयदलत्क्ष्माधरस्यापि गम्या
गाढोद्गीर्णोज्ज्वलश्रीरहनि न रहिता नो तमःकज्जलेन ।
प्राप्तोत्पत्तिः पतङ्गान्न पुनरुपगता मोषमुष्णत्विषो वो
वर्तिः सैवान्यरूपा सुखयतु निखिलद्वीपदीपस्य दीप्तिः ॥ २३ ॥

उष्णत्विषस्तिग्मभानोर्दीप्तिर्द्युतिर्वो युष्मान्सुखयत्वानन्दयतु सुखिनः करोतु । किंभूतस्य । निखिलद्वीपदीपस्य निखिलानि समग्राणि द्वीपानि जम्बूप्रभृतीनि तेषां दीप इव दीपः । प्रकाशकत्वात् । तस्य । सैव वर्तिरन्यरूपा । अन्यद्रूपं यस्याः सान्यरूपा । अभिन्नरूपया दीपस्य वर्त्या भवितव्यम् । वर्तिः कीदृशी । वर्तिरिव सामान्यवर्तिरूपा न, अन्यरूपा । तद्विलक्षणेत्यर्थः । तदाह—कल्पापायवायोरपि नो गम्या । कल्पस्यापायः कल्पापायः कल्पान्तस्तस्य वायुः प्रलयमारुतस्तस्यापि न गमनीया । किंभूतस्य । अदयरयदलत्क्ष्माधरस्य । चण्डवेगेन दलन्तः शीर्यमाणाः क्ष्माधराः पृथ्वीधरा यस्मिन्वायौ तस्य तथोक्तस्य प्रचण्डवेगस्फुटद्गिरेः । पुनः किंभूता । अहनि दिवसे, गाढोद्गीर्णोज्ज्वलश्रीर्गाढा उद्गीर्णा उज्ज्वला श्रीर्यया सा गाढोद्गीर्णोज्ज्वलश्रीर्भृशोद्वान्तनिर्मलदीप्तकान्तिः । किं च न न रहिता न न वर्जिता तमःकज्जलेन तिमिरमष्या । अपि तु रहितैवेत्यर्थः । अन्यच्च, प्राप्तोत्पत्तिर्लब्धजन्मा । कस्मात् । पतङ्गाद्दिनपतेः । न पुनरुपगता नैव प्राप्ता । कम् । मोषं खण्डनम् । इतरा तु वर्तिर्वायुगम्या भवति । दिवसे गाढोद्गीर्णोज्ज्वलश्रीर्न भवति । कज्जलेन रहिता न च । पतङ्गात्शलभान्मोषमुपैति नोत्पत्तिमिति व्यतिरेकः ॥

निःशेषाशावपूरप्रवणगुरुगुणश्लाघनीयस्वरूपा
पर्याप्तिं नोदयादौ दिनगमसमयोपप्लवेऽप्युन्नतैव ।
अत्यन्तं यानभिज्ञा क्षणमपि तमसा साकमेकत्र वस्तुं
ब्रध्नस्येद्धा रुचिर्वो रुचिरिव रुचितस्याप्तये वस्तुनोऽस्तु ॥ २४ ॥

ब्रध्नस्य सूर्यस्य रुचिर्दीप्तिः रुचितस्याभिलषितस्य वस्तुनः पदार्थस्य वो युष्माकमा-

---

१. 'शम्या' इति पाठः, 'विनाश्या' इति वल्लभव्याख्या. २. 'रुचिरस्त्व' इति पाठः

मयेऽस्तु भवतु । कथंभूता । इद्धा दीप्ता । केव । रुचिरिवाभिलाष इव । कस्य । अभ्रस्य । अन्यस्याश्रुतत्वात् । तदेव दर्शयति—निःशेषाः समस्ता आशा दिशः । निःशेषाश्च ता आशाश्च तासामवपूरो भरणं तत्र प्रवणानुकूला गुरुश्चासौ गुणश्च गुरुगुणस्तेन श्लाघनीयस्वरूपा चेति समासः । इतरा तु रुचिः समस्तमनोरथभरणानुगुणश्लाघात्मा [न] भवति । पुनरपि किंभूता । पर्याप्तमलं दिनादौ दिवसारम्भे उन्नतैव नावनता । किं तन्नैव, नो । किं तु दिनगमसमयोपप्लवेऽपि दिवसापायकालविपद्यपि । इतरापि रुचिरभिलाष उदयकाले तद्विरतौ च नोन्नमत्येव । किं च, अत्यन्तमतीव तमसान्धकारेण साकं सहैकत्रैकस्मिन्प्रदेशे क्षणमपि मुहूर्तमपि वस्तुमासितुमनभिज्ञा अवेदित्री । इतरापि तामसाभावेनेति ॥

> बिभ्राणः शक्तिमाशु प्रशमितबलवत्तारकौर्जित्यगुर्वीं
> कुर्वाणो लीलयाधः शिखिनमपि लसच्चन्द्रकान्तावभासम् ।
> आदध्यादन्धकारे रतिमतिशयिनीमावहन्वीक्षणानां
> बालो लक्ष्मीमपारामपर इव गुहोऽहर्पतेरातपो वः ॥ २९ ॥

अहर्पतेर्दिननाथस्यातप उद्द्योतो वो युष्माकं लक्ष्मीमादध्यात्कुर्यात् । आदध्यादिति प्रार्थनायां लिङ् । किंभूताम् । अपारामपर्यन्ताम् । क इव । अपरोऽन्यो गुह इव कार्तिकेय इव । बालोऽजरठः । किंभूतो गुहः किंभूतश्चातपः । आतपगुहयोः श्लेषं दर्शयति—शक्तिं बिभ्राणो जगदुद्योतनसामर्थ्यं दधानः । कीदृशीम् । प्रशमितबलवत्तारकौर्जित्यगुर्वीम् । प्रशमितं शान्तिं नीतं बलवदतीव निःशेषं तारकौर्जित्यं नक्षत्रतेजस्तेन गुर्वीम् । गुहोऽपि शक्तिमायुधविशेषं बिभर्ति । बलवांश्चासौ तारकश्च बलवत्तारकोऽसुरविशेषस्तस्यौर्जित्यं तेजस्विता प्रशमिता यया सा प्रशमितबलवत्तारकौर्जित्या । सा चासौ गुर्वी चेति समासः । आशु शीघ्रम् । पुनरपि किं कुर्वन् । कुर्वाणः । कम् । शिखिनं वह्निम् । कथम् । अधोऽधस्तात् । लीलयानादरेण तिरस्कुर्वाणः परिभवन् । कम् । शिखिनं मयूरमधः कुर्वाणः । लसच्चन्द्रकान्तावभासमपि । चन्द्रकान्ताश्चन्द्रमणयः । लसन्तश्च ते चन्द्रकान्ताश्च तेषामवभासः कान्तिस्तमपि । अथ लसंश्चासौ चन्द्रश्च तस्य कान्तश्चावभासश्च तमपि । शिखिनं वह्निं किंविशिष्टम्, लसचन्द्रं वसु सुवर्णं रत्नं वसु मणि(?) सर्व तस्येव कान्तः कमनीयोऽवभासो दीप्तिर्यस्य तम् । गुहोऽपि शिखिनं मयूरमधः स्थापयति । लीलया विलासेन । किंविशिष्टम् । लसन्तो ये चन्द्रका मेचकास्तेषामन्तास्तैरवभासते यस्तमपि । पुनरपि किं कुर्वन् । आवहन् । काम् । रतिं धृतिम् । किंभूताम् । अतिशयिनीमधिकतराम् । केषाम् । वीक्षणानां विलोचनानां कोकाभिधानविलोचनानाम् । क्व । अन्धकारे तमसि । संसेव्यत्वात् तेजस्तदानीमक्ष्णोः इतरस्तस्यैव संबन्धिना मेलनीयम्(?) । गुहोऽप्यन्धकारेः श्रीशिवस्य दृशामानन्दमादधाति । बालो डिम्भः ॥

---

१. 'आदेयात्' इति पाठः. २. 'ईक्षणानां' इति पाठः.

ज्योत्स्नांशाकर्षपाण्डुद्युति तिमिरमषीशेषकल्माषमीष-
ज्जृम्भोद्गतेन पिङ्गं सरसिजरजसा संध्यया शोणशोचिः ।
प्रातः प्रारम्भकाले सकलमपि जगच्चित्रमुन्मीलयन्ती
कान्तिस्तीक्ष्णत्विषोऽक्ष्णां मुदमुपनयतात्तूलिकेवातुलां वः ॥ २६ ॥

तीक्ष्णत्विषस्तिग्मांशोः कान्तिर्दीधितिर्वो युष्माकमक्ष्णां दृशां मुदं हर्षमुपनयतादाहरतात् । अतुलामपरिमिताम् । केव । तूलिकेव चित्रकारलेखनीव । किं कुर्वती । उन्मीलयन्ती प्रकटयन्ती । किं तत् । जगत् । किंभूतम् । चित्रं नानाप्रकारम् । तूलिकापि चित्रं कर्म । किंभूतं चित्रमिति श्लेषयति—ज्योत्स्ना चन्द्रिका तस्या अंशो लेशस्तस्याकर्ष उपादानं तेन पाण्डुद्युति पाण्डुच्छायं जगत् । चित्रमपि शुक्लवर्णानुप्रवेशात्पाण्डुद्युति । तथा तिमिरशेषकल्माषम् । मषीवत्तिमिरं तिमिरमषी तस्याः शेष उद्धारः(?) तेन कल्माषं कर्बुरम् । इतरदपि मषीलेशशारं भवति । किं च, पिङ्गं पीतम् । केन । सरसिजरजसा पद्मपरागेण । कीदृशेन । ईषज्जृम्भोद्भूतेन किंचिद्विकाससमुद्गतेन । चित्रमपि हरितालादिना । अपि च शोणशोचि अरुणच्छायम् । कया । संध्यया संध्यासमयेन हेतुना । चित्रं हिङ्गुलादिना । कदेत्याह—प्रातः प्रारम्भकालेऽहर्मुखारम्भसमये । सकलं समस्तमिति वा । जगच्चित्रमिति समस्तं वा । जगच्चित्रमिव जगच्चित्रमिति । 'ज्योत्स्नांशाकृत्स्नपाण्डु' इति पाठान्तरम् । तत्र ज्योत्स्नांशो ज्योत्स्नालेशस्तेनाकृत्स्नपाण्डु असमस्तपाण्डु । स्तोकत्वाज्ज्योत्स्नाया इति योज्यम् ॥

आयान्ती किं सुमेरोः सरणिररुणिता पद्मरागैः परागै-
राहोस्वित्स्वस्य माहारजनविरचिता वैजयन्ती रथस्य ।
माञ्जिष्ठी प्रष्ठवाहावलिविधुतशिरश्चामराली नु लोकै-
राशङ्क्यालोकितैवं सवितुरघनुदे स्तात्प्रभातप्रभा वः ॥ २७ ॥

सवितुरादित्यस्य प्रभातप्रभा प्रातर्द्युतिर्वो युष्माकमघनुदे पापनुत्त्यै स्ताद्भवतु । किंभूता । आलोकिता वीक्षिता । किं कृत्वा । आशङ्क्य वितर्क्य । लोकैर्जनैः । कथम् । एवमित्थम् । तदेव दर्शयति—किं कुर्वती । आयान्त्यागच्छन्ती । सुमेरोर्देवाचलात् । सरणिर्मार्गः । अरुणिता रक्तीकृता । कैः । परागैः रजोभिः । किंभूतैः । पद्मरागैः पद्मरागमणिजन्मभिः । आहोस्विद्वितर्के । रथस्य स्यन्दनस्य स्वकीयस्य वैजयन्ती पताका । कीदृशी । माहारजनविरचिता । महारजनस्यायं रागो माहारजनः कौसुम्भं (वासः) तेन रचिता निर्मिता । पुनरपि कीदृशी । प्रष्ठवाहेति । प्रष्ठा उत्तमा ये वाहा वाजिनस्तेषामावलिः पङ्क्तिस्तस्या विधुतशिरांसि चलितमूर्धानस्तेषु चामराली चमरपङ्क्तिः सा किं नु । कीदृशी । माञ्जिष्ठी मञ्जिष्ठया रक्तेति । एवमिति प्रत्येकं योज्यम् ॥

---

१. 'माहारजनेन कौसुम्भवाससा' इति वल्लभः. २. 'चामरालीव' इति पाठः.

ध्वान्तध्वंसं विधत्ते न तपति रुचिमन्नातिरूपं व्यनक्ति
[1]न्यक्त्वं नीत्वापि नक्तं न वितरतितरां तावदह्नस्त्विषं यः।
स प्रातर्मा विरंसीदसकलपटिमा पूरयन्युष्मदाशा-
माशाकाशावकाशावतरणतरुणप्रक्रमोऽर्कप्रकाशः॥ २८॥

सोऽर्कप्रकाशः सूर्यालोको युष्मदाशां भवन्मनोरथं पूरयन्पूर्णं कुर्वन्मा विरंसीन्मा विरामं यासीत्। पुनःपुनः पूरयत्विति यावत्। प्रातरसकलपटिमा अपरिपूर्णतैक्ष्ण्यः। किंभूतः। आशाकाशेति। आशा दिशः। आकाशं खम्। आशाश्चाकाशं चाशाकाशे तयोरवकाशोऽन्तरालं तत्रावतरणमवतारस्तत्र तरुणो नवः प्रक्रमः सामर्थ्यं यस्य स एवमुक्तः। तत्रावतरणे पटुरित्यर्थः। भूयो विशेष्यते—यो ध्वान्तध्वंसं विधत्ते तमश्छेदं कुरुते। न च तपति। कथम्। रुचिमद्दीप्तिमत्। कठोरमिति भावः। तथा नातिरूपं रूपत्वविशिष्टं गुणं व्यनक्ति प्रकटयति। मन्दत्वात्। न्यक्त्वं न्यग्भावं नीत्वापि प्रापय्यापि नक्तं रात्रिं न वितरतितरां नातिशयं तावन्न प्रयच्छति अह्नो दिवसस्य त्विषं दीप्तिम्। स्वरूपकथनमिदम्। अथवा महानुभावानां शर्मोपादानं तमसो ध्वान्तस्य ध्वंसं मोहच्छेदं स्वस्य च परस्य च विधत्ते। न स्वेच्छया तपत्युत्तापयति। नातिरूपं व्यनक्ति आत्मानं न श्लाघते। नक्तं रूपं विपक्षं प्रतिक्षिप्य दिवसकल्पमित्रस्य तेजोवृद्धिं करोति॥

तीव्रं निर्वाणहेतुर्यदपि च विपुलं यत्प्रकर्षेण चाणु
प्रत्यक्षं यत्परोक्षं यदिह यदपरं नश्वरं शाश्वतं च।
यत्सर्वस्य प्रसिद्धं जगति कतिपये योगिनो यद्विदन्ति
ज्योतिस्तद्द्विप्रकारं सवितुरवतु वो बाह्यमाभ्यन्तरं च॥ २९॥

बाह्यं बहिःकरणपरिच्छेद्यं आभ्यन्तरं योगसमाधिगम्यं ज्योतिः। तीव्रमित्यादिना यथाक्रमं स्वरूपमेवाह—यत्तीव्रं तीक्ष्णं यन्निर्वाणहेतुर्मुक्तिकारणम्। विपुलं विस्तीर्णं रश्म्याख्यं यत्प्रकर्षेणातिशयेनाणु सूक्ष्मम्। यत्प्रत्यक्षमिन्द्रियादिग्राह्यं यत्परोक्षमतीन्द्रियम्। यदिह संनिकृष्टं यदपरं विप्रकृष्टम्। यन्नश्वरं नष्टमस्थायि यच्छाश्वतं नित्यम्। यत्सर्वस्य जगतः प्रसिद्धं यत्कतिपये कियन्त एव योगिनो विदन्ति द्विचतुरा व्यासादयो योगिनो जानन्ति तदेवंविधमिति सूर्यतेजो द्विप्रकारं द्विविधं बाह्यमाभ्यन्तरं च युष्मान्रक्षत्विति प्रथमोक्तिः॥

रत्नानां मण्डनाय प्रभवति नियतोद्देशलब्धावकाशं
वह्नेर्दार्वादि दग्धुं निजजडिमतया कर्तुमानन्दमिन्दोः[2]।

---

१. 'न्यक्तां' इति पाठः. २. 'अह्नि' इति पाठः.

यच्च[1] त्रैलोक्यभूषाविधिरघदहनं ह्लादि वृष्ट्याशु तद्वो
बाहुल्योत्पाद्यकार्याधिकतरमवतादेकमेवार्कतेजः ॥ ३० ॥

अर्कतेजो रविधाम वो युष्मानवताद्रक्षतु । किंभूतम् । बाहुल्योत्पाद्यकार्याधिकतरम् बाहुल्येन प्राचुर्येणोत्पाद्यं तच्च तत्कार्यं च तेनाधिकतरम् । बाहुल्येनोत्पादनीयानि भूयांसि कार्याणि यस्य तद्बाहुल्योत्पाद्यकार्यम् । अतस्तेभ्योऽधिकतरम् । अमीष्वपि तु तेजो विद्यते । अन्यदीपतेजोभ्यो व्यतिरेकं दर्शयति—रत्नानां पद्मरागमणिप्रभृतीनां मणीनां मण्डनाय भूषणायैव संपद्यते न दाहाय । कीदृशं तत् । नियतोद्देशलब्धावकाशम् । नियतः परिमितः स चासावुद्देशश्च तस्मिँल्लब्धोऽवकाशो येन तत् । नियतोद्देशवर्ति यत्कर्णादौ न्यस्तं तमेव द्योतयतीत्यर्थः । वह्नेः पावकस्य तेजो दार्वादि काष्ठादि दग्धुं भस्मीकर्तुं प्रभवति न मण्डनाय । इन्दोश्चन्द्रस्यानन्दमाह्लादं कर्तुं प्रभवति न मण्डनाय । कीदृशं तत् । निजजडिमतया सहजशीतलत्वेनोपलक्षितम् । अर्कतेज एकमेव तु त्रैलोक्यस्य भूषाविधिर्जगदलंकारक्रिया । अघदहनं पापापनोदि । ह्लादि वृष्ट्या कृत्वा आशु आनन्दकारि । तथा हि—'आदित्याज्जायते वृष्टिः' । एकस्यैवार्कतेजसो मण्डनाद्यनेकक्रियाकारित्वम् । अत एवाह—बाहुल्योत्पाद्यकार्येति ॥

मीलच्चक्षुर्विजिह्मश्रुति जडरसनं निघ्रितघ्राणवृत्ति
स्वव्यापाराक्षमत्वक्परिमुषितमनः श्वासमात्रावशेषम् ।
[1]विस्रस्ताङ्गं पतित्वा स्वपदपहरतादश्रियं वोऽर्कजन्मा
कालव्यालावलीढं जगदगद इवोत्थापयन्प्राक्प्रतापः ॥ ३१ ॥

अर्कजन्मा भानुप्रभवः प्राक्प्रतापो नवप्रतापो वो युष्माकमश्रियमलक्ष्मीमपहरतादपनयतु । किं कुर्वन् । जगद्भुवनमुत्थापयन् । किंभूतम् । कालव्यालावलीढम् । व्याल इव कालः समयभुजंगस्तेनावलीढं ग्रस्तम् । क इव । अगद इव विषापहारी भेषजयोग इव । यथा कालसर्पदष्टं जगज्जन्तुचक्रमगद उत्थापयति तद्वदिति । किं कुर्वाणं जगदुत्थापयन् । स्वपत् शयानम् । किं कृत्वा । पतित्वा । कीदृशं तत् । मीलच्चक्षुः मीलन्ती चक्षुषी यस्य तत्संकुचल्लोचनम् । एवं विजिह्मश्रुति । योऽहिना दष्टः सोऽपि मीलच्चक्षुर्विजिह्मश्रुतिश्च भवति । जडा विजिह्मा मन्दा रसना रसनेन्द्रियं यस्य तज्जडरसनं अपटु श्रवणेन्द्रियं यस्य तत्तथोक्तम् । मूकजिह्वम् । निघ्रितघ्राणवृत्ति निघ्रितावसादं गता घ्राणस्य नासिकाया वृत्तिर्यस्य तत् । स्वविषयगन्धोपलब्धिलक्षणप्रवृत्तिर्निघ्रिता यस्य । किं च, स्वव्यापाराक्षमत्वक् स्वव्यापारः स्पर्शपरिच्छित्तिस्तस्याक्षमा त्वग्यस्य तदक्षमत्वक् । परिमुषितमनः परिमुषितमनस्कं व्यपहृतचित्तम् । इन्द्रियाणि मनोऽधिष्ठितानि । श्वासमात्रावशेषं श्वासैकशेषम् । एतेन दुर्बलेन्द्रियाणां विषयेऽप्रवर्तनमुक्तम् । सर्वेन्द्रियाणां

---

१. 'यत्तु' इति पाठः. २. 'अश्रियं' इति पाठान्तरम्.

तु स्वव्यापाराक्षमत्वं दर्शितम् । विस्रस्ताङ्गमिति । अगदस्यापि सर्वमेतदस्ति । अगदपक्षे काल इव व्यालः मृत्युहेतुत्वादिति योज्यम् ॥

निःशेषं नैशमम्भः प्रसभमपनुदन्नश्रुलेशानुकारि
स्तोकस्तोकापनीतारुणरुचिरचिरादस्तदोषानुषङ्गः ।
दाता दृष्टिं प्रसन्नां त्रिभुवननयनस्याशु युष्मद्विरुद्धं
वध्याद्ब्रध्नस्य सिद्धाञ्जनविधिरपरः प्राक्तनोऽर्चिःप्रचारः ॥ ३२ ॥

ब्रध्नस्यार्चिप्रचारो रश्मिप्रसरो युष्मद्विरुद्धं भवदहितं वध्याद्धन्तु । प्राक्तनः पूर्वकालीयः । कीदृशोऽसौ । सिद्धाञ्जनविधिः सिद्धमव्यभिचरितं च तदञ्जनं च तस्य विधिरिव विधातेव । अपरोऽन्यः । स एव विशेष्यते—किंभूतः । दाता दृष्टिम् । दातेति ताच्छील्यात्तृच् । अत एव दृष्टिमिति द्वितीया । किंभूताम् । प्रसन्नाम् । (साधु ददातीति दाता । तन् ।) किं कुर्वन् । अपनुदन् । किम् । नैशमम्भोऽवश्यायजलम् । निःशेषं समस्तम् । प्रसभं प्रकाशम् । कीदृशं तत् । अश्रुलेशानुकारि नयनजलकल्पम् । सिद्धाञ्जनविधिरप्यश्रु व्यपनयति । पुनरपि कीदृशः । स्तोकस्तोकापनीतारुणरुचिः स्तोकस्तोकेन लेशेनापनीता उत्सृष्टा अरुणरुचिर्लोहितद्युतिः (येन) । किंचिदुज्झितबालभावत्वात्स एवमुक्तः । अथवा स्तोकस्तोकं लेशेनापनीताभिभूता अरुणस्य सारथेरनूरो रुचिर्येन । तथा इतरोऽपि लोचनानां शनैःशनैररुणतामपहरति । अचिरात्संक्षेपात् । अस्तदोषानुषङ्गस्त्यक्तरात्रिसंपर्कः । इतरोऽपि निर्धूतकामलादिदोषसंसर्गः । आशु शीघ्रं वध्यादित्यनेन संबन्धनीयम् ॥

भूत्वा जम्भस्य भेत्तुः ककुभि परिभवारम्भभूः शुभ्रभानो-
र्बिभ्राणा बभ्रुभावं प्रसभमभिनवाम्भोजजृम्भाप्रगल्भा ।
भूषा भूयिष्ठशोभा त्रिभुवनभवनस्यास्य वैभाकरी प्रा-
ग्विभ्रान्ति भ्राजमाना विभवतु विभवोद्भूतये सा विभा वः ॥ ३३ ॥

वैभाकरी सावित्री सा विभा कान्तिर्वो युष्माकं विभवोद्भूतयेऽर्थसंपत्त्यै विभवतु विभुर्भवतु । किं कुर्वती । भ्राजमाना शोभमाना । विभ्रान्ति । क्रियाविशेषणमेतत् । किं कुर्वाणा । बभ्रुभावं कपिलिमानं बिभ्राणा धारयन्ती । किं कृत्वा । परिभूतेः प्रारम्भभूमिर्भूत्वा संपद्य । शुभ्रभानोर्विलक्षगोः । क्व । ककुभि दिशि । कस्य । जम्भस्य भेत्तुर्जम्भासुरारेरिन्द्रस्य । कथम् । प्रसभं प्रकटम् । किं च । अभिनवाम्भोजजृम्भाप्रगल्भा प्रत्यग्रपद्मोद्बोधविदग्धा । या भूषा अलंकृतिः । भूयिष्ठशोभा बाहुल्येन । त्रिभुवनभवनस्य त्रिलोकीवेश्मनः । अस्य एतस्येति प्रत्यक्षेण निर्दिशति । यथा कोऽपि बलिनः पक्षे स्थित्वा स्वप्रतिपक्षं हत्वा स्वगृहं समृद्ध्या भूषयति तद्वदत्र बोद्धव्यम् ॥

---

१. 'स्थित्वा' इति पाठान्तरम्. २. 'निर्भ्रान्ति' इति पाठान्तरम्.

संसक्तं सिक्तमूलादभिनवभुवनोद्यानकौतूहलिन्या
यामिन्या कन्ययेवामृतकरकलशावर्जितेनामृतेन ।
अर्कालोकः क्रियाद्वो मुदमुदयशिरश्चक्रवालालवाला-
दुद्यन्बालप्रवालप्रतिमरुचिरहः पादपप्राक्प्ररोहः ॥ ३४ ॥

अर्कालोको भास्वत्प्रतापो मुदं हर्षं वो युष्माकं क्रियात् । कीदृशः । अहःपादपप्राक्प्ररोहः । अहःपादपो दिवसतरुस्तस्य प्राक्प्ररोहः प्रथमाङ्कुरः । किं कुर्वन् । उद्यन्नुद्गच्छन् । उदयशिरश्चक्रवालालवालात् । उदेत्यस्मिन्नित्युदय उदयाचलस्तस्य शिरांसि शृङ्गाणि तेषां चक्रवालं मण्डलं तदेवालवालं जलाधारस्थानं तस्मात् । किंभूतात् । सिक्तमूलात् । कथम् । संसक्तमनवरतम् । कया । यामिन्या रात्र्या । किंभूतया । अभिनवेति । उद्यानमिव भुवनं भुवनोद्यानं तस्मिन्कौतूहलं विद्यते यस्याः सा तद्वती तया । कयेव । कन्ययेव कुमार्येव । कुमारीणां किलैष धर्म इति । केन । अमृतेन सुधया । तुषारेणेति परमार्थः । किंभूतेन । अमृतकरकलशावर्जितेन । अमृतकर ओषधीशः स एव कलशस्तेनावर्जितं क्षिप्तं तेन सिक्तमूलात् । अन्यत्रामृतेन जलेन करकलशावर्जितेन । पुनरपि कीदृशः । बालप्रवालप्रतिमरुचिर्नवकिसलयसमानकान्तिः । प्ररोहोऽपि नवविद्रुमसमो भवति ॥

भिन्नं भासारुणस्य क्वचिदभिनवया विद्रुमाणां त्विषेव
त्वङ्गन्नक्षत्ररत्नद्युतिनिकरकरालान्तरालं क्वचिच्च ।
नान्तर्निःशेषकृष्णश्रियमुदधिमिव ध्वान्तराशिं पिबन्स्ता-
दौर्वः पूर्वोऽप्यपूर्वोऽग्निरिव भवदघप्लुष्टयेऽर्कावभासः ॥ ३५ ॥

अर्कावभासः सूर्यालोको भवदघप्लुष्टये युष्मत्पापभस्मीकरणाय स्ताद्भवतु । क इव । अपूर्वोऽन्यः पूर्वोऽपि प्राक्तनोऽप्यौर्वोऽग्निरिव वडवानल इव । किं कुर्वन् । ध्वान्तराशिं ति-मिरपुञ्जं पिबन्ग्रसन् । कमिव । उदधिमिव समुद्रमिव । ध्वान्तराशिसमुद्रयोस्तुल्यतां दर्शयति—क्वचित्प्रदेशेऽरुणस्यानूरोर्भासा दीप्त्याभिनवया प्रत्यग्रया भिन्नं विशेषितम् । कयेव । विद्रुमाणां त्विषा रुचेव । यथोदधिरपि विद्रुमाणां प्रवालानां त्विषा भिन्नो भ-वति । क्वचित्प्रदेशे । पुनरपि किंभूतम् । त्वङ्गन्ति कम्पन्ते रत्नानीव यानि नक्षत्राणि तेषां द्युतिस्तस्या निकरस्तेन करालं विषमीकृतमन्तरालं मध्यं यस्य स तथोक्तस्तम् । स-मुद्रोऽपि त्वङ्गन्ती या नक्षत्रकल्परत्नद्युतिस्तस्या निकरेण करालान्तरालो भवति । पु-नरपि किंभूतम् । नान्तर्निःशेषकृष्णश्रियम् । अन्तर्मध्ये निःशेषा समस्ता कृ-ष्णश्रीः कृष्णशोभा यस्य सोऽन्तर्निःशेषकृष्णश्रीस्तम्, अपि तु कृष्णशोभाशून्यमेव । अ-न्यत्र शेषः फणी । कृष्णो नारायणः । श्रीः पद्मा । शेषश्च कृष्णश्च श्रीश्च शेषकृष्ण-श्रियः । अन्तर्मध्ये निर्गताः शेषकृष्णश्रियो यस्मादुदधेः सोऽन्तर्निःशेषकृष्णश्रीस्तम्, अपि त्वन्तःशेषकृष्णश्रीयुक्तमेव ॥

गन्धर्वैर्गद्यपद्यव्यतिकरितवचोहृद्यमातोद्यवाद्यै-
राद्यैर्यो नारदाद्यैर्मुनिभिरभिनुतो वेदवेद्यैर्विभिद्य।
आसाद्यापद्यते यं पुनरपि च जगद्यौवनं सद्य उद्य-
न्नुद्द्योतो द्योतितद्यौर्द्यतु दिवसकृतोऽसाववद्यानि वोऽद्य॥ २६॥

दिवसकृत आदित्यस्योद्द्योतोऽवभासो वो युष्माकमवद्यानि पापानि द्यतु खण्डयतु। असावयम्। किंविशिष्टः। द्योतितद्यौः प्रकाशितान्तरिक्षः। पुनः किंभूतः। अभिनुतः। कैः। गन्धर्वैर्देवविशेषैः। कथम्। गद्यपद्यव्यतिकरितवचोहृद्यम्। अपादपदसंतानं गद्यम्। नियतपादपरिमाणं पद्यम्। गद्यं च पद्यं च गद्यपद्ये ताभ्यां व्यतिकरितं मिश्रितं तच्च तद्वचश्च तेन हृद्यम्। मनोहरमिति यावत्। क्रियाविशेषणमेतत्। आतोद्यवाद्यैर्मनोहरमिति संबध्यते। आतोद्यानि च तानि वाद्यानि च तैरिति। आतोद्यवाद्यं चतुर्विधम्—ततं विततं (आनद्धम्) घनं सुषिरमिति। ततं वीणादिकम्। विततं (घनं) कांस्यतालादिकम्। घनं (आनद्धं) मुरजादिकम्। सुषिरं वंशादिकम्। गन्धर्वैरेव किम्। न। मुनिभिश्च नारदाद्यैर्नारदप्रमुखैः। आद्यैरादिभूतैः। वेदेषु वेद्या यथा तैः। विभिद्य विभागीकृत्य। यमासाद्य जगद्यौवनमापद्यते प्राप्यते। पुनरपि भूयोऽपि। सद्यस्तत्क्षणम्। उद्यन्नुद्गच्छन्। यौवनमिति मनोज्ञत्वं लक्षयति। यथा यौवने सर्वोऽपि भावो मनोहरो भवति। तथा यमप्यासाद्य मनोहरो भवतीति यौवनमित्युक्तम्॥

आवानैश्चन्द्रकान्तैश्च्युततिमिरतया तानवात्तारकाणा-
मेणाङ्कालोकलोपादुपहतमहसामोषधीनां लयेन।
आराद्युत्प्रेक्ष्यमाणा क्षणमुदयतटान्तर्हितस्याहिमांशो-
राभा प्राभातिकी वोऽवतु न तु नितरां तावदाविर्भवन्ती॥ २७॥

अहिमांशोश्चण्डार्चिष आभा कान्तिर्वो युष्मानवतु। कीदृशी। प्राभातिकी औषसी। किं क्रियमाणा। उत्प्रेक्ष्यमाणानुमीयमाना। न तु नैव नितरां स्पष्टमाविर्भवन्ती प्रकटीभवन्ती। तावदिति ततोऽनन्तरमाविर्भवन्तीति संबध्यते। कीदृशस्य। क्षणं क्षणमात्रमुदयतटीव्यवहितस्य। कैरनुमीयमाना। चन्द्रकान्तैर्मणिभिः। आवानैः शुष्यद्भिः। ते हिमकरस्पृष्टास्तोयं स्यन्दन्ते चन्द्रालोकाभावाच्छुष्यन्ति। अपि च तारकाणामुडूनां तानवात्तनुत्वात्। कुतस्तानवम्। च्युततिमिरतया गलितध्वान्ततया। ओषधीनां लयेन विलीनतया। कीदृशाम्। उपहतमहसां नष्टतेजसाम्। कुत उपहतमहस इत्याह—एणाङ्कालोकलोपाच्चन्द्रोद्द्योतपरिमोषात्। ओषधयोऽपि चन्द्रमसि विलुप्तभासि विच्छाया भवन्ति। आरादित्यवाग्भाग इति योज्यम्॥

---

१. 'वेदवेद्यैर्विभिद्य' इति पाठः. २. 'आवान्तैः' इति पाठः. ईषत्सलिलबिन्दुस्राविभिरिति तदर्थः.

सानौ सा नौदये नारुणितदल[1]पुनर्यौवनानां वनाना-

मालीमालीढपूर्वा परिहृतकुहरोपान्तनिम्ना तनिम्ना ।

भा वोऽभावोपशान्तिं दिशतु दिनपतेर्भासमाना[2] समाना

राजी राजीवरेणोः समसमयमुदेतीव यस्या वयस्या ॥ ३८ ॥

सा दिनपतेरर्कस्य भा दीप्तिर्वो युष्मभ्यमभावोपशान्तिममाग्योपशमं दिशतु य-च्छतु । किं कुर्वती । भासमाना द्योतमाना । यस्याः समसमयमेककालं राजीवरेणोः प-द्मपरागस्य राजी पङ्क्तिरुदेत्युद्गच्छति । वयस्येव सखीव या समाना तुल्या । या वनानां काननानामालीं पङ्क्तिं न न आलीढपूर्वा, अपि त्वालीढपूर्वैव । द्वौ नञौ प्रकृतार्थं गम-यतः । कीदृशानां वनानाम् । अरुणितदलपुनर्यौवनानाम् । अरुणितान्यरुणीकृतानि तानि दलानि च तैः पुनर्यौवनं येषां तानि तथोक्तानि । सानौ भूधरभूमौ । कीदृशि । औदये उदयस्यायमौदयस्तत्र । कीदृशी सा । परिहृतकुहरोपान्तनिम्ना । कुहराणामुपान्तानि कुहरोपान्तानि तानि च निम्नानि च परिहृतानि कुहरोपान्तनिम्नानि रन्ध्रप्रान्तागाधानि यया सा परिहृतकुहरोपान्तनिम्ना । तनिम्ना तानवेन हेतुना[3] ॥

उज्जृम्भाम्भोरुहाणां प्रभवति पयसां या श्रिये नोष्णतायै

पुष्णात्यालोकमात्रं न तु दिशति दृशां दृश्यमाना विघातम् ।

पूर्वाद्रेरेव पूर्वं दिवमनु च पुनः[4] पावनी दिङ्मुखाना-

मेतांस्यैनी विभासौ नुदतु नुतिपदैकास्पदं प्राक्तनी वः ॥ ३९ ॥

विभा दीप्तिः इनस्येयमैनी सावित्री एनांसि पापानि वो युष्माकं नुदतु निरस्यतु । नुतिपदैकास्पदं स्तुतिपदैकप्रतिष्ठा । प्राक्तनी प्राभातिकी । या पयसां जलानां श्रिये लक्ष्म्यै प्रभवति विभुर्भवति नोष्णतायै औष्ण्याय । कीदृशानाम् । उज्जृम्भाम्भोरुहाणा-मुज्जृम्भानि विकसितान्यम्भोरुहाणि येषु पयःसु तानि तेषां विकचकुशेशयानाम् । किं च, दृशामालोकमात्रं पुष्णाति न तु दृश्यमानोपलभ्यमाना विघातं व्यथां दिशति यच्छति । या पूर्वं प्रथममुदयाद्रेरेवोदयाचलस्यैव पावनी पवित्रयित्री । तदनु द्यां दिवं लक्षीकृत्य पावनी भवति । पुनरपि दिङ्मुखानामाशास्यानाम् । एतदुक्तं भवति—पुनरपि (पूर्वं) उदयाचले तदनु दिवि तदनन्तरमाशामुखेषु भवति ॥

---

१. 'लसद्यौवनानां' इति पाठः. २. 'असमाना अनुपमा' इति [illegible]-ख्यानम्. ३. 'वनानां वृक्षसमूहानामाली पङ्क्तिः पूर्वमालीढा पूर्वैरास्वादि[illegible]-लालीढपूर्वा सा तथाविधा न भवतीति न । किं [illegible] पूर्वस्मि-न्नद्रिस्थवनराजीमालासु [illegible] । [illegible] निषा । अत एव नञ्भ्यामनुपभुक्तपूर्वामालीमिति द्विवचनान्तम्' इति [illegible]. ४. 'ततः' इति पाठः.

वाचां वाचस्पतेरप्यचलभिदुचिताचार्यकाणां प्रपञ्चै-
वैरञ्चानां तथोच्चारितचतुरऋचां चाननानां चतुर्णाम् ।
उच्येतार्चासु वाच्यच्युतिशुचि चरितं यस्य नोच्चैर्विविच्य
प्राच्यं वर्चश्चकासच्चिरमुपचिनुतात्तस्य चण्डार्चिषो वः ॥ ४० ॥

चण्डार्चिषस्तिग्मभासो वर्चस्तेजो वो युष्माकमुपचिनुतादुपचयं करोतु । चिरं चिरकालम् । चकासद्दीप्यमानम् । प्राच्यं प्राचीभवम् । यस्यैवंविधं चरितमनुष्ठानमर्चासु प्रतिमासु स्तुतिषु उच्चैरत्यर्थं विविच्य विभिद्य नोच्येत नाभिधातुं शक्येत । अपर्यन्ततामनेन दर्शयति । कीदृशं तत् । वाच्यच्युतिशुचि वाच्यमवद्यं तस्य च्युतिस्तद्रहितता तया शुचि विशुद्धम् । कैर्नोच्येत । प्रपञ्चैर्विस्तारैः । कासाम् । वाचां गिराम् । कस्य वाचस्पतेरपि । किं पुनरस्मादृशाम् । कीदृशां वाचाम् । अचलभिदिन्द्रस्तस्योचितं योग्यमाचार्यकमाचार्यत्वं यासां तास्तथोक्तास्तासाम् । किं च, वैरञ्चानां विरञ्चसंबन्धिनां चतुर्णामाननानां वाचां प्रपञ्चैरिति योज्यम् । कीदृशाम् । उच्चारितचतुरऋचाम् । उच्चारिताश्चतुरा अघविघातपटव ऋचो यैस्तानि तथोक्तानि तेषामिति ॥

मूर्ध्न्यद्रेर्धातुरागस्तरुषु किसलयो विद्रुमौघः समुद्रे
दिङ्मातङ्गोत्तमाङ्गेष्वभिनवनिहितैः सान्द्रसिन्दूररेणुः ।
सीम्नि व्योम्नश्च हेम्नः सुरशिखरिभुवो जायते यः प्रकाशः
शोणिम्नासौ खरांशोरुषसि दिशतु वः शर्म शोभैकदेशः ॥ ४१ ॥

खरांशोस्तीक्ष्णतेजसः प्रकाशः शोभैकदेशः शोभैकास्पदं वो युष्मभ्यं शर्म सुखं दिशतु यच्छतु । यो जायते धातुराग इव परार्थे शोणिम्ना हेतुना । प्रत्येकं संबन्धनीयम् । उषसि प्रातः । मूर्ध्नि शिरसि । कस्य । अद्रेः । युज्यमानशब्दो वतिमन्तरेणापि वत्यर्थं गमयति । यथा सिंहः सिंह इत्याह । सिंहवदिति गम्यते । एवं सर्वत्र द्रष्टव्यम् । किं च, किसलयः पल्लवस्तरुषु शाखिषु । किसलय इति पुंलिङ्गनिर्देशः । न पुनर्लिङ्गमशिष्यं लोकाश्रयत्वादिति । यथा पल्लवशब्दस्य पुंलिङ्गस्यापि लोकाश्रयं नपुंसकत्वं दृश्यते यथा (तथा) किसलयस्य नपुंसकस्यापि पुंस्त्वमिति नोच्यते । शोभैकदेशः सामानाधिकरण्यात्पुंलिङ्गता । आविष्टलिङ्गत्वात् । अन्यथा आवचनमियमुष्ट्रिका (?) कुलहेतुर्धनमिति स्त्रीत्वनपुंसकत्वसामानाधिकरण्येनावचनहेत्वोः स्त्रीनपुंसकता स्यात् । यैस्तु किसलयमिति नपुंसकमेवाभिधीयते तेषां नेदं नायम् । समुद्रे वारिधौ विद्रुमौघः । दिङ्मातङ्गोत्तमाङ्गेषु दिग्वारणशिरःस्वभिनवनिहितः प्रत्यग्रस्थापितः सान्द्रसिन्दूररेणुर्बहुल-

१. 'रुचिर' इति पाठः. २. 'अर्चास्विवाच्य' इति पाठः. ३. 'श्रियं' इति पाठः. ४. 'युष्मानुपचिनुताद्वर्धयत्वित्यर्थः' इति शालिव्याख्यानम्. ५. 'विहितः' इति पाठः.

सिन्दूररेणुः । व्योम्नो गगनस्य सीम्नि मर्यादायामलंकारायोज्ज्वलरूपकर्तृभूतत्वात्सुरशि-खरिभुवो मेरुसंभवस्य हेम्नः कनकस्य प्रकाशः ॥

अस्ताद्रीशोत्तमाङ्गे श्रितशशिनि तमःकालकूटे निपीते
यति व्यक्तिं पुरस्तादरुणकिसलये प्रत्युषःपारिजाते ।
उद्यन्त्यारक्तपीताम्बरविशदतरोद्वीक्षिता तीक्ष्णभानो-
र्लक्ष्मीर्लक्ष्मीरिवास्तु स्फुटकमलपुटापाश्रया श्रेयसे वः ॥ ४२ ॥

तीक्ष्णभानोर्लक्ष्मीः श्रीः श्रेयसे पुष्टयेऽभ्युदयायास्तु भवतु । केव । लक्ष्मीरिव पद्मेव । स्फुटकमलपुटापाश्रया विकसिताम्भोरुहपुटाधिवासा । किं कुर्वती । उद्यन्ती उद्ग-च्छन्ती । कस्याम् । पुरस्तात्पूर्वस्यां दिशि । कस्मिन्नवसरे । अस्ताद्रीशोत्तमाङ्गे अस्ता-द्रिरेवेशो महादेवस्तस्योत्तमाङ्गे अस्ताचलेशशिरसि श्रितशशिन्यधिरूढचन्द्रमसि । इतरे-ऽपीशोत्तमाङ्गे परमेश्वरमूर्धनि इन्दुयुजि । तमःकालकूटे निपीते ग्रस्ते कालकूट इव तमस्तत्र निपीते ग्रस्ते । अन्यत्र तम इव कालकूटो मोहात्मकत्वात् । तत्र शंभुना पीते सति । अस्ताद्रिरेवेशः । किं च, याति गच्छति सति । व्यक्तिं प्रकटताम् । प्रत्युषः-पारिजाते । किंविशिष्टे । अरुणकिसलयेऽनूरुप्रवाले । अन्यत्र पारिजाततरावरुणपल्लव इति योज्यम् । किंभूता । आरक्तपीताम्बरविशदतरोद्वीक्षिता ईषद्रक्तपीतभावभाजि संध्यया नभसि स्फुटतरं दृष्टा । इतरापि आरक्तोऽनुरक्तः पीताम्बरो विष्णुस्तेन व्यग्रं विलोकिता ॥

नोदन्वाञ्जन्मभूमिर्न तदुदरभुवो बान्धवाः कौस्तुभाद्या
यस्याः पद्मं न पाणौ न च नरकरिपूरःस्थली वासवेश्म ।
तेजोरूपापरैव त्रिषु भुवनतलेष्वादधाना व्यवस्थां
सा श्रीः श्रेयांसि दिश्यादशिशिरमहसो मण्डलाग्रोद्गता वः ॥ ४३ ॥

इति द्युतिवर्णनम् ।

सा श्रीर्लक्ष्मीः श्रेयांसि वो युष्मभ्यं दिश्याद्देयात् । अशिशिरमहस उष्णरश्मेर्मण्ड-लाग्रोद्गता मण्डलप्रान्तसमुत्थिता । कीदृशी । तेजोरूपा महःस्वभावा । अपरस्मादेव । प्रसिद्धश्रीविलक्षणेत्यर्थः । तदेव वैलक्षण्यं दर्शयति—यस्या जन्मभूमिर्नोदन्वान्समुद्रो नो-त्पत्तिस्थानम् । कौस्तुभाद्या न बान्धवा यस्याः । तदुदरभुव उदन्वदुदरजन्मनः । यस्याः पद्मं न पाणौ कमलं हस्ते न । न च यस्या नरकरिपूरःस्थली वासवेश्म । नरको

---

१. 'रुचिरतरोद्वीक्षिता' इति पाठः. २. 'तीव्रभासः' इति पाठः. ३. 'पुटोदराश्रया' इति पाठः. ४. 'त्रिभुवनभवने' इति पाठः. ५. 'तेजोवर्णनम्' इति पाठः.

भौमासुरस्तस्य रिपुर्नारायणस्तस्योरःस्थली सैव वासवेश्म वासगृहमिति। त्रिषु भुवनतलेषु त्रैलोक्ये। आदधाना कुर्वती। व्यवस्थां व्यवस्थानम्। इतरा अनवस्थानेति व्यतिरेकः॥ इति द्युतिवर्णनव्याख्यानम्॥

रक्षन्त्वक्षुण्णहेमोपलपटलमलं लाघवादुत्पतन्तः
पातङ्गाः पङ्ग्ववज्ञाजितपवनजवा वाजिनस्ते जगन्ति।
येषां वीतान्यचिह्नोन्नयमपि वहतां मार्गमाख्याति मेरा-
वुद्यन्नुद्दामदीप्तिर्द्युमणिमणिशिलावेदिकाजातवेदाः॥ ४४॥

ते पातङ्गाः सावित्रा वाजिनस्तुरङ्गा जगन्ति भुवनानि रक्षन्तु पान्तु। किं कुर्वन्तः। उत्पतन्तः। कथम्। अक्षुण्णहेमोपलपटलम्। अक्षुण्णमचूर्णितं हेमोपलपटलं सुवर्णाश्मजालं यत्रोत्पतने। खुरैर्व्योम स्पृशन्त इति भावः। कुतः। लाघवाल्लघुभावात्। अलमत्यर्थम्। मेराविति वक्ष्यति। तत्रोत्पतन्त इत्यस्य संबन्धः। कीदृशास्ते। पङ्ग्ववज्ञयाजितपवनजवाः। पङ्ग्ववज्ञया जितः पवनजवो वायुवेगो यैस्ते। वायुः किल चरणरहितस्तस्य कियान्वेगो भविष्यतीत्यवज्ञा। येषां मार्गं वर्त्म आख्याति सूचयति। कः कर्ता। द्युमणिमणिशिलावेदिकाजातवेदाः। दिवो मणिर्द्युमणिरादित्यः। मणिरिव मणिः। अलंकारभूतत्वात्। तस्य मणयः सूर्यकान्तास्तेषां वेदिकाश्चतुष्कास्तासु जातवेदा आशुशुक्षणिः। 'जातका जातवेदाः' इति पाठान्तरे जातकाशब्दो वेदिकापर्यायः। किं कुर्वन्। उद्यन्नुद्गच्छन्। उद्दामदीप्तिः प्राज्यप्रकाशः। किं कुर्वतां वाहानाम्। वहतां गच्छताम्। क्व। मेरौ पूर्वाचले। वीतान्यचिह्नोन्नयमपि मार्गं विगतापरलिङ्ग इत्यह(?)मपि। अपिशब्दश्चिह्नान्तराभावेऽपि मार्गप्रख्यापनसामर्थ्यं जातवेदसो दर्शयति॥

प्लुष्टाः पृष्ठेंऽशुपातैरतिनिकटतया दत्तदाहातिरेकै-
रेकाहाक्रान्तकृत्स्नत्रिदिवपथपृथुश्वासशोषाः श्रमेण।
तीव्रोदन्यास्त्वरन्तामहितविहतये सप्तयः सप्तसप्ते-
रभ्याशाकाशगङ्गाजलसरलगलावाङ्नताग्राननाः वः॥ ४५॥

सप्तसप्तेः सप्ततुरगस्य सप्तयोऽश्वा अहितविहतये दुरितविनाशाय वो युष्माकं त्वरन्तामुत्सहन्ताम्। किंभूताः। तीव्रोदन्या उदग्रपिपासाः। उदन्यायाः हेतुं दर्शयति— प्लुष्टा दग्धाः पृष्ठे। कैः। अंशुपातै रश्मिप्रसरैः। अतिनिकटतया प्रत्यासन्नत्वेन। कथंभूतैः। दत्तदाहातिरेकैर्वितीर्णतापाधिक्यैः। कीदृशास्ते। एकाहेति। एकं च तदहश्चैका-

1. 'पङ्गोर्निजप्रेरकस्यारुणस्यावज्ञयावहेलनेन यद्वा पङ्गोः पादविकलस्य वायोरवज्ञया' इति शान्तिव्याख्यानम्. 2. 'गलावर्जिताग्राननाः' इति पाठः.

हस्तेनाक्रान्त एकाह्नाक्रान्तः । कृत्स्नश्चासौ त्रिदिवपथश्च कृत्स्नत्रिदिवपथः । एकाह्नाक्रान्तश्चासौ कृत्स्नत्रिदिवपथश्चेति समासः । तेन पृथुः श्रान्तो येषां त एवमुक्ताः । श्रमेण हेतुना । पुनरपि किंभूताः । अभ्याशे समीपे आकाशगङ्गा तस्या जलं तस्मिन्नरलगलानि अवाङ्नताग्राणि आननानि येषां ते तथोक्ताः । समीपमन्दाकिनीसलिलकन्धुकंधराधोगतकोटिमुखाः ॥

गत्वान्यान्पार्श्वतोऽश्वान्स्फटिकतटदृषद्दृष्टदेहा द्रवन्ती
व्यस्तेऽह्न्यस्तसंध्येयमिति मृदुपदा पद्मरागोपलेषु ।
सादृश्यादृश्यमूर्तिर्मरकतकटके क्लिष्टसूता सुमेरो-
र्मूर्धन्यावृत्तिलब्धध्रुवगतिरवतु ब्रध्नवाहावलिर्वः ॥ ४६ ॥

ब्रध्नवाहावलिः सूर्याश्वपङ्क्तिर्वो युष्मानवतु पातु । कीदृशी । क्लिष्टसूता कदर्थितसारथिः । क । मेरोर्मूर्धनि देवाचलशिरसि । तदेव दर्श्यते । द्रवन्ती गच्छन्ती । कीदृशी सती—स्फटिकतटदृषद्दृष्टदेहा । स्फटिकस्य तटास्तेषु दृषदस्तासु दृष्टो देहः प्रतिबिम्बितो यया सा तथोक्ता । किं कृत्वा । मत्वावगम्य । पार्श्वतः पार्श्वयोः । अन्यानश्वानपरान्वाजिनः । स्वां छायामेव स्फटिकतटदृषत्क्रान्तामपरानश्वान्बुद्ध्यावधार्य द्रवन्ती धावन्तीत्यर्थः । शैलीयं वाजिनां यदन्यमश्वं दृष्ट्वा धावन्ति । किं च पद्मरागोपलेषु पद्मरागमणिषु मृदुपदा मन्दपदविक्षेपा । किं च, व्यस्तेऽह्नि विगतवासरे अस्तसंध्येयमिति भ्रान्त्या । भ्रान्तिहेतुरुक्तत्वादिनास्तसंध्यायामध्वा किल विच्छिन्न इति मृदुपदताहेतुः । अपि च, मरकतकटके मरकतमेखलायां सादृश्येनादृश्या मूर्तिर्यस्याः सैवमुक्ता । सा हरिता मरकतकटकश्च हरितस्ततो विभ्रमः स्यात् किं मरकत उताश्वालीति । अदृश्यानवधारिता मूर्तिर्यस्या इत्यर्थः । कीदृशी । आवृत्तिलब्धध्रुवगतिः । आवृत्त्यावर्तनेन लब्धा ध्रुवा अचपला गतिर्यया सा तथोक्ता ॥

हेलालोलं वहन्ती विषधरदमनस्याग्रजेनावकृष्टा
स्वर्वाहिन्याः सुदूरं जनितजवजया स्यन्दनस्य स्यदेन ।
निर्व्याजं तायमाने हरितिमनि निजे स्फीतफेनाहितश्री-
रश्रेयांस्यश्वपङ्क्तिः शमयतु यमुनेवापरा तापनी वः ॥ ४७ ॥

अश्वपङ्क्तिस्तुरगावली वो युष्माकमश्रेयांसि पापानि शमयतु । किंभूता । तापनी सावित्री । किं च, यमुनेव कालिन्दी यथा । अश्वपङ्क्तिकालिन्द्योः सामान्यविशेषणे—किं कुर्वती । वहन्ती गच्छन्ती । कथम् । हेलालोलं विलासचञ्चलं [illegible] । किंभूताश्वपङ्क्तिः । अवकृष्टा संवलिता । केन । विषधरदमनस्याग्रजेन गरुडस्याग्रजेनारुणेन । पुनः किंभूता । स्वर्वाहिन्या गङ्गाया जनितजवजया कृतवेगाभिभवया । स्यन्दनस्य

१. 'द्रुतगतिः' इति पाठः. २. 'स्फीतफेनाङ्कितश्रीः' इति पाठः.

रयस्य स्यदेन वेगेन। कथम्। सुदूरमतीव। निजस्फीतफेनाहितश्रीः स्वकीयोपचितडिण्डीरकृतशोभा। कस्मिन्सति। तायमाने विस्तारं याति सति। हरितिमनि हरितगुणे। कथम्। निर्व्याजं निरुपधि। यमुनाप्युच्छाचल(?)चञ्चलं वहन्ती विषधरदमनस्य श्रीकृष्णस्याग्रजेन पूर्वजेन बलेनावकृष्टा वृन्दावनं प्रति नीता। पार्श्ववाहिन्या गङ्गाया जवं जयति। स्यन्दनस्य पर्वतादेः क्षरणस्य प्रस्रवणस्य स्यदेन रयेण हरितत्वेन(?)प्रसृतनिजफेनेनाहितशोभा भवति। तापनी तपनस्येयं तापनीति कृत्वा अपरा द्वितीयेति योज्यम्॥

मार्गोपान्ते सुमेरोर्नुवति कृतनतौ नाकधाम्नां निकाये
वीक्ष्य व्रीडानतानां प्रतिकुहरमुखं किंनरीणां मुखानि।
सूतेऽसूयत्यपीषज्जडगति वहतां कंधरार्धैर्वलद्भि-
र्वाहानां व्यस्यताद्वः सममसमहरेर्हेषितं कल्मषाणि॥ ४८॥

असमहरेर्विषमाश्वस्य रवेर्वाहानां वाजिनां हेषितं शब्दायितं सममेककालं युष्माकं कल्मषाणि पापानि व्यस्यतादपनयतु। किं कुर्वताम्। वहतां गच्छताम्। कथम्। ईषज्जडगति किंचिन्मन्दगति। प्रायेण सूतो नोत्तेजयति तत्र। सूतेऽरुणेऽसूयत्यपि सारथौ कुप्यत्यपि। कैरुपलक्षितानाम्। कंधरार्धैः। किं कुर्वद्भिः। वलद्भिः परिवर्तमानैः। किं कृत्वा। वीक्ष्य दृष्ट्वा। कानि। मुखानि। कासाम्। किंनरीणामश्वमुखीनाम्। कीदृशीनाम्। व्रीडानतानां व्रीडावतीनाम्। भानुदर्शनोत्सुकाः किंनर्यः प्रतिकुहरमुखेषु तिष्ठन्ति। कस्मिन्नवसरे। नाकधाम्नां देवानां निकाये व्राते नुवति स्तुवाने सति। किंभूते। कृतनुतौ विहितप्रणामे। क्व। मार्गोपान्तेऽध्वसमीपे। कस्य। सुमेरोर्देवाचलस्य॥

धुन्वन्तो नीरदालीर्निजरुचिहरिताः पार्श्वयोः पक्षतुल्या-
स्तालूत्तानैः खलीनैः खचितमुखरुचश्च्योतता लोहितेन।
उड्डीयेव व्रजन्तो वियति गतिवशादर्कवाहाः क्रियासुः
क्षेमं हेमाद्रिहृद्यद्रुमशिखरशिरःश्रेणिशाखाशुका वः॥ ४९॥

इत्यश्ववर्णनम्।

अर्कवाहा रवितुरगाः क्षेमं कल्याणं वो युष्माकं क्रियासुः कुर्वन्तु। किंभूताः। हृद्यो हृदयप्रियः स चासौ द्रुमश्च हृद्यद्रुमः स एव हेमाद्रिस्तस्य शिखराणि तेषां शिरांसि तेषां श्रेणिः सैव शाखा तस्याः शुका इव शुकाः। किं कुर्वन्तः। व्रजन्तो गच्छन्तः। क्व। वियति खे। किं कृत्वेव। उड्डीयेव। कुतः। गतिवशाद्गत्यनुरोधात्। पुनरपि किं कुर्वन्तः। धुन्वन्तः कम्पयन्तः। काः। नीरदालीर्मेघपङ्क्तीः। क्व। पार्श्वयोः। कीदृशीः। निजरुचिहरिताः स्वकीयद्युतिहरितगुणयुक्ताः। पक्षतुल्याः। शुका अपि सहजहरितवपुषः पक्षान्धूनयन्ति

१. 'कंधराग्रैः' इति पाठः.

दृशीय व्रजन्ति च । अपि च, अर्काश्वाः, खचितमुखरुचो रचितमुखशोभाः । केन । लोहितेन शोणितेन । किं कुर्वता । श्च्योतता क्षरता । कैर्हेतुभिः । खलीनैः कविकाभिः । किंभूतैः । तालूत्तानैः । तालूत्तानानि तालूत्तानानि तानि हि यदा भवन्ति । तदा क्षतं कुर्वन्ति । ततोऽसृक् स्रवति । स्वभावोक्तिरियम् । शुकास्तु स्वभावाल्लोहिततुण्डा भवन्ति ॥ इत्यश्ववर्णनव्याख्यानम् ॥

तुरगवर्णनानन्तरं सारथिस्तवनमाह—

प्रातःशैलाग्ररङ्गे रजनिजवनिकापायसंलक्ष्यलक्ष्मी-

विक्षिप्यापूर्वपुष्पाञ्जलिमुडुनिकरं सूत्रधारायमाणः ।

यामेष्वङ्केष्विवाह्नः कृतरुचिषु चतुर्ष्वेव जातप्रतिष्ठा-

मव्यात्प्रस्तावयन्वो जगदटनमहानाटिकां सूर्यसूतः ॥ ५० ॥

सूर्यसूतो रविसारथिर्वो युष्मानव्याद्रक्षतु । किं कुर्वन् । प्रस्तावयन्प्रारभमाणः । काम् । जगदटनमहानाटिकाम् । जगतामटनं भ्रमणं तदेव महानाटिका ताम् । क्व । प्रातःशैलाग्ररङ्गे । प्रातःशैल उदयाचलस्तस्याग्रं तदेव रङ्गो नर्तनभूमिस्तत्र । कीदृशः सः । रजनिजवनिकापायसंलक्ष्यलक्ष्मीः । रजनी रात्रिः सैव जवनिका प्रतिसीरा तस्या अपायस्तेन संलक्ष्योपलक्ष्या लक्ष्मीः श्रीर्यस्यारुणस्य स तथोक्तः । किं कृत्वा । विक्षिप्य विकीर्य । कम् । उडुनिकरं तारकासंघम् । किंभूतम् । अपूर्वपुष्पाञ्जलिम् । किंभूतः । सूत्रधारायमाणः सूत्रधार इवाचरन् । सूत्रधारोऽपि नाटिकां रङ्गे प्रस्तावयति । जवनिकापगमदृश्यलक्ष्मीर्भवति । उडुनिकरतुल्यां पुष्पाञ्जलिं विकिरति । किंभूतां ताम् । जातप्रतिष्ठामुत्पन्नस्थितिम् । क्व । अह्नो यामेषु प्रहरेषु । कियत्सु । चतुर्ष्वेव । अङ्केष्विव । नाटिकापि चतुरङ्का भवति । किंभूतेषु । कृतरुचिषु विहितदीप्तिषु । अन्यत्र कृतशोभेषु ॥

आक्रान्त्या वाह्यमानं पशुमिव हरिणा वाहकोऽन्यो हरीणां

भ्राम्यन्तं पक्षपाताज्जगति समरुचिः सर्वकर्मैकसाक्षी ।

शत्रुं नेत्रश्रुतीनामवजयति वयोज्येष्ठभावे समेऽपि

स्थाम्नां धाम्नां निधिर्यः स भवदघनुदे नूतनः स्तादनूरुः ॥ ५१ ॥

नूतनो नवोऽनूरुररुणो भवदघनुदे युष्मत्पापविनाशाय स्ताद्भवतात् । कीदृशः । स्थाम्नां स्थिराणां धाम्नां तेजसां निधिर्निधानम् । नेत्रश्रुतीनां सर्पाणां शत्रुं गरुत्मन्तमवजयत्यभिभवति । प्रायेण सामर्थ्यं किमनयोर्नास्तीत्याह—वयोज्येष्ठभावे समेऽपि सति । एकत्र वयसा कालकृतशरीरावस्थया ज्येष्ठोऽधिकः । अन्यत्र वयसां पक्षिणां ज्येष्ठः प्रधानं तद्भावे समेऽपि तुल्येऽपीति सन्देहसङ्करेण लेतत् । अत्र व्यतिरेकं दर्शयति—किंभूतं नेत्रश्रुतिशत्रुम् । वाह्यमानं वाहनीक्रियमाणम् । हरिणा विष्णुना । आक्रान्त्या

१. 'यातः प्रतिष्ठां' इति पाठः.

विक्रमेण बलात्कारेण । पशुमिव अश्वादिर्यथा । असावपि कदाचिदेवंभूतः स्यादित्याह—वाहको वाहयिता । अग्र्यः प्रधानम् । केषाम् । हरीणां वाजिनाम् । हरिशब्दसाम्येनावजयं दर्शयति—एक एकेन हरिणा वाह्यते । अपरस्तु बहून्हरीन्वाहयति । किं च भ्राम्यन्तं पर्यटन्तम् । जगति लोके । कस्मात् । पक्षपातात्पक्षविक्षेपात्पतनाद्धूननाद्वा । अयं तु जगति समरुचिस्तुल्यानुरागः पक्षपातरहितः । सर्वकर्मैकसाक्षी सर्वेषां कर्मणामेकः साक्षी द्रष्टा । पक्षपातादिति शब्दच्छलेनावजयं दर्शयति—पक्षपातो हि राग उच्यते । गरुडस्तु पक्षपातवान् । इतरस्तद्रहितः ॥

दत्तार्घैर्दूरनम्रैर्वियति विनयतो वीक्षितः सिद्धसार्थैः
सानाथ्यं सारथिर्वः स दशशतरुचेः सातिरेकं करोतु ।
आपीय प्रातरेव प्रततहिमपयःस्यन्दिनीरिन्दुभासो
यः काष्ठादीपनोऽग्रे जडित इव भृशं सेवते पृष्ठतोऽर्कम् ॥ ९२ ॥

दशशतरुचेर्भानोः सूतो युष्माकं सानाथ्यं सनाथतां करोतु क्रियात् । सातिरेकं सातिशयम् । किंभूतः । यः पृष्ठेनार्कमादित्यं भजते । अग्रे काष्ठादीपनो दिगुद्द्योतनः । किं कृत्वा । प्रभात एव चन्द्रदीप्तीः पीत्वा । कीदृशीः । प्रततहिमपयःस्यन्दिनीः । संततप्रसृतमिहिकाम्बुस्राविणीः । क इव । जडित इव शीतार्दित इव । भृशं सुष्ठु । जडितोऽपि पृष्ठेऽर्कं निषेवते काष्ठान्यग्रे दीपयति । तथा च 'पृष्ठतोऽर्कं निषेवेत जठरेण हुताशनम्' इत्यागमविदः । पुनरपि किंभूतः । वीक्षितो दृष्टः । कैः । सिद्धसार्थैः । कीदृशैः । विश्राणितार्घैः । दूरनम्रैर्भक्तिप्रह्वैः । वियत्याकाशे । विनयात्प्रश्रयात् ॥

मुञ्चन्रश्मीन्दिनादौ दिनगमसमये संहरंश्च स्वतन्त्र-
स्तोत्रप्रख्यातवीर्योऽविरतहरिपदाक्रान्तिबद्धाभियोगः ।
कालोत्कर्षाल्लघुत्वं प्रसभमधिपतौ योजयन्यो द्विजानां
सेवाप्रीतेन पूष्णात्मसम इव कृतस्त्रायतां सोऽरुणो वः ॥ ९३ ॥

सोऽरुणोऽनूरुर्वो युष्मांस्त्रायतां पातु । यः पूष्णा आत्मसम इव कृतः स्वतुल्य इव विहितः । किंभूतेन । सेवाप्रीतेन आराधनतुष्टेन । किं कुर्वन् । रश्मीनश्वसंयमनरज्जून्मुञ्चञ्शिथिलयन् । क्व । दिनादौ वासरमुखे । भगवानपि दिनादौ रश्मीन्भासो विसृजति । दिनगमसमये दिनावसाने संहरंश्च । स्वतन्त्रः स्वैरी । तथा देवोऽपि दिनावसाने । अन्यत्र तु (?) तोत्रप्रख्यातवीर्यः प्राजनकर्मणि प्रसिद्धशक्तिः । देवपक्षे स्तोत्रैर्वेदोक्तैर्मन्त्रैः प्रसिद्धं वीर्यं यस्य स तथोक्तः । पुनः कीदृशोऽरुणः । अविरतहरिपदेति । अविरता इत-

१. 'सिद्धसाध्यैः' इति पाठः. २. 'वितत' इति पाठः. ३. 'स्वसमः' इति पाठः. ४. देवपक्षे स्वतन्त्रस्तोत्रेत्यत्र 'खर्परे शरि वा विसर्गलोपो वक्तव्यः' इति विसर्गलोपो ज्ञेयः.

स्ततस्त्रस्ता हरयोऽश्वास्तेषां पदानि चरणन्यासास्तेषामाक्रान्तौ सत्यां बद्ध आदरो यस्यासौ । अथवा तुरगपदैराक्रान्तो बद्ध उद्यमो यस्य सः । देवपक्षे अविरतं निरन्तरं हरिपदस्याकाशस्याक्रमणे बद्धोद्यमः । अपरं किं कुर्वन् । योऽरुणो द्विजानामीश्वरे गरुडे पत्लाक्ष्युत्वमवरजत्वं योजयन् । समयाधिक्यात्पूर्वकालोत्पन्नत्वात् । देवपक्षे द्विजानां ब्राह्मणानामधिपतौ चन्द्रे पत्लाक्ष्युत्वमदृश्यतां योजयन् । कालस्याधिक्यात् । दिनकरकिरणोदयकालः प्रकृष्ट इति भावः । अरुणदिनकरयोः साम्याच्छ्लेषोक्तिरलंकारः ॥

शातः श्यामलतायाः परशुरिव तमोऽरण्यवह्नेरिवार्चिः

प्राच्येवाग्रे ग्रहीतुं ग्रहकुमुदवनं प्रागुदस्तोऽग्रहस्तः ।

ऐक्यं भिन्दन्द्युभूम्योरवधिरिव विधातेव विश्वप्रबोधं

वाहानां वो विनेता व्यपनयतु विपन्नाम धामाधिपस्य ॥ ५४ ॥

धामाधिपस्य सूर्यस्य वाहानामश्वानां विनेतारुणो वो युष्माकं या काचिद्विपत्तिस्तन्नाम व्यपनयतु विनाशयतु । किंभूतः । शातस्तीक्ष्णः । उत्प्रेक्षते—श्यामलतायाः परशुरिव । श्यामा रात्रिः सैव लता । 'श्यामा रात्रिर्लता स्मृता' । परशुरिव कुठार इव । तच्छेदकत्वात् । अपरं किंभूतोऽरुणः । तमोरण्यवह्नेरर्चिरिव । तम एवारण्यं तमोरण्यं तत्र वह्निस्तमोरण्यवह्निस्तस्यार्चिरिव ज्वालेव । दावाग्निरित्यर्थः । अपरं किंभूतोऽरुणः । प्राच्या पूर्वया दिशाग्रे पुरस्ताद्ग्रहा एव कुमुदानि तेषां वनं तद्ग्रहीतुं प्रायप्रत्युषसि उदस्त उत्क्षिप्तोऽग्रहस्तो हस्ताग्र इव । यथा हस्ताग्रेणानायासेनैव कुमुदानि गृह्यन्ते एवमयं ग्रहान्गृह्णाति । अपरं क इव । आकाशधरित्र्योरैक्यमेकीभावं भिन्दन्नपनयन्सन्नवधिरिव मर्यादेव । अपरं किंभूतोऽरुणः । विश्वं जगत्तस्य प्रबोधं विधाता । क इव । प्रजापतिरिव । यथा विधाता विश्वं प्रसुप्तमव्यक्तकल्पं प्रबोधयति, एवमयं सुप्तं प्रबोधयति ॥

पौरस्त्यस्तोयदर्तोः पवन इव पतत्पावकस्येव धूमो

विश्वस्येवादिसर्गः प्रणव इव परं पावनो वेदराशेः ।

संध्यानृत्योत्सवेच्छोरिव मदनरिपोर्नन्दिनान्दीनिनादः

सौरस्याग्रे सुखं वो वितरतु विनतानन्दनः स्यन्दनस्य ॥ ५५ ॥

सौरस्य सूर्यसंबन्धिनः स्यन्दनस्य रथस्याग्रे स विनतानन्दनोऽरुणो वो युष्माकं सुखं वितरतु । किंभूतः । पौरस्त्यः पूर्वदिग्भवस्तोयदर्तोः प्रावृट्कालस्याग्रे पवन इव । यथैव प्रावृषोऽग्रे पौरस्त्यो वायुरुपलभ्यमानो वर्षाः सूचयंस्तत्कालोचितेषु कृष्यादिकार्येषु लोकान्व्यापारयति एवमयमपि स्यन्दनस्याग्रे उपलभ्यमानः सौरं कर्म सूचयंस्तत्कालभाविषु ग्रामनगरादिकार्येषु लोकान्व्यापारयति । अपरं किंभूतः । [illegible]

१. 'पतन्' इति पाठः.

पावकश्च पतत्पावकस्तस्याग्रे धूम इव । यथा अरण्यां मथ्यमानायामग्रे प्रथमं धूम उपलभ्यमानो वैश्वानरस्य पतनं सूचयति । दर्शपौर्णमासादिना यजमानं प्रवर्तयन् । अनुदिते सूर्ये तेषामप्रवृत्तिरित्यतोऽयं धूम इव भवतीति भावः । विश्वस्येवादिसर्गस्त्रैलोक्यस्य प्रथमा सृष्टिरिव प्रधानान्महान्महतोऽहंकार इत्यादिलक्षणा पञ्चभूतात्मिका । आदिग्रहणेनावान्तरप्रलयसर्गान्व्यवच्छिनत्ति । यथादिसर्गो विश्वस्याविर्भावकारणतामुपगच्छंल्लोकानां स्वस्वपुरुषार्थेष्वपवर्गपर्यन्तेषु प्रवर्तमानानां हेतुतामुपयाति एवमयमप्यग्रे व्यवस्थितः सौरस्य रथस्याविर्भावविज्ञानं प्रति कारणभावमुपगच्छन्समयाध्युषितत्वमुपलक्ष्यते । तस्यामेव वेलायां तेषां होमः प्रवर्तते नानुदिते ॥ (नृत्योत्सवे) आदिसर्ग इवासौ भवतीति भावः प्रणव इव परं पावनो वेदराशेरिति वेदचतुष्टयस्याग्रे व्यवस्थितः प्रणव इवोंकार इव । परमुत्कृष्टः । पावनः सकलकल्मषक्षयकारी । स हि वेदानामग्र एवोच्चार्यते । स च जपस्मरणोच्चारणद्वारेण पुरुषं पुनाति । एवमनूरुरपि सौरस्य रथस्याग्रे व्यवस्थितः । स्नानदानजपहोमादिप्रवृत्तिद्वारेण पुरुषं पुनात्येव । एवमस्मिन्ननुदिते स्नानादेरसंभवात् । अतोऽसौ प्रणव इव भवतीत्यभिप्रायः । संध्यानृत्योत्सवेच्छोरित्यादि । संध्यायां नृत्यं तदेवोत्सवस्तमिच्छतीति संध्यानृत्योत्सवेच्छुस्तस्य मदनरिपोः श्रीमहादेवस्याग्रे नन्दिनान्दीनिनादः अग्रे प्रथममुपजायमानः । नृत्याभिलाषिणि (शिवे) गणेन नन्दिना नन्दिकेश्वरेण कृतो नान्द्या मुरजविशेषेण नादः शब्दः । नन्दिनान्दीनिनाद इवासौ भवतीति भावः ॥

> पर्याप्तं तप्तचामीकरकटकतटे श्लिष्टशीतेतरांशा-
> वासीदत्स्यन्दनाश्वानुकृतिमरकते पद्मरागायमाणः ।
> यः सोत्कर्षां विभूषां कुरुत इव कुलक्ष्माभृदीशस्य मेरो-
> रेनांस्यह्नाय दूरं गमयतु स गुरुः काद्रवेयद्विषो वः ॥ १६ ॥

काद्रवेयद्विषो गरुडस्य गुरुर्ज्येष्ठो भ्रातारुणो वो युष्माकमेनांसि पापान्यह्नाय झटिति दूरं गमयतु । स क इत्याह—योऽरुणः कुलक्ष्माभृदीशस्य कुलपर्वतेश्वरस्य मेरोः सोत्कर्षां सातिशयिनीं विभूषां कुरुत इव । कथम् । पर्याप्तं प्रभूतम् । यः पद्मरागायमाणः । क्व । तप्तचामीकरकटकतटे । तप्तं यच्चामीकरमिति तप्तग्रहणेनोज्ज्वलतां दर्शयति । तथा श्लिष्टः संलग्नः शीतेतरांशुरादित्यो यस्मिन्स तथाभूतस्तस्मिन् । पुनः किंभूते । आसीदन्तो ढौकमानाः स्यन्दनाश्वास्तेषामनुकृतिः प्रतिबिम्बं तदेव मरकतं यस्मिंस्तत्तथोक्तमित्येके । इतरे तु आसीदन्त ईषदवसादं गच्छन्तो ये स्यन्दनाश्वास्तैरनुकृतं मरकतं यस्मिन् । तप्तचामीकरकटकतटे सौवर्णपाषाणे रथस्य प्रज्वलनात् (प्रतिफलनात्) । यथा कस्यचित्कुलक्ष्माभृदीशस्य कुलेनैव ये क्ष्माभृतो राजानस्तेषामीशस्य राज्ञः सौवर्ण उपर्युपरि निबद्धमरकतपद्मरागाभरणविशेषो भूषां कुरुत एवमस्यापि ॥

---

१. 'अश्वानुकृतमरकते' इति पाठः.

नीत्वाश्वान्सप्त कक्षा इव नियमवशं वेत्रकल्पप्रतोद-
स्तूर्णं ध्वान्तस्य राशावितरजन इवोत्सारिते दूरभाजि ।
पूर्वं प्रष्ठो रथस्य क्षितिभृदधिपतीन्दर्शयंस्त्रायतां व-
स्त्रैलोक्यास्थानदानोद्यतदिवसपतेः प्राक्प्रतीहारपालः ॥ ९७ ॥

दिवसपतेः श्रीसूर्यस्य प्राक्प्रतीहारपालो महाप्रतीहारो वो युष्मांस्त्रायताम् । किं कुर्वन् । क्षितिभृदधिपतीन्मेरुप्रमुखान्दर्शयन् । किंभूतः । रथस्य प्रष्ठोऽग्रगामी । तथा वेत्रकल्पो दण्डसदृशः प्रतोदो यस्य स तथोक्तः । किं कृत्वा, सप्ताश्वान्नियमवशं नीत्वा । सप्त कक्षा इव सप्तकक्षाद्वाराणीव । यथा प्रतीहारोऽपि सप्तद्वाराणि नियमवशं नयति एवमश्वान्नीत्वा । सप्तशब्दः काकाक्षिगोलकन्यायेनाश्वैः कक्षाभिश्च संबध्यते । क्व सति । ध्वान्तस्य राशावन्धतमसस्य समूहे तूर्णं क्षिप्रमुत्सारिते दूरभाजि सति । कस्मिन्निव । इतरजन इव । यथेतरजनो दूरमुत्सार्यते गले धृत्वा क्षिप्यते । कीदृशस्य । त्रैलोक्येति । त्रिलोकीसंबन्धि यदास्थानदानं तत्रोद्यतो यो दिवसपतिस्तस्य । मुख्यः प्रतीहारराज इत्यर्थः ।

वज्रिञ्ज्ञातं विकासीक्षणकमलवनं भासि नाभासि वह्ने
तातं नत्वाश्वपार्श्वान्नय यम महिषं राक्षसा वीक्षिताः स्थ ।
सप्तीन्सिञ्च प्रचेतः पवन भज जवं वित्तपावेदितस्त्वं
वन्दे शर्वेति जल्पन्प्रतिदिशमधिपान्पातु पूष्णोऽग्रणीर्वः ॥ ९८ ॥

पूष्ण आदित्यस्याग्रणीररुणो वो युष्मान्पातु । किं कुर्वन् । प्रतिदिशमधिपान्दिक्पालानिति जल्पन् । इतीति किम् । हे वज्रिन्, ईक्षणान्येव कमलानि तेषां वनं तद्भवतो विकासि जातमुन्निद्रतां गतम् । हे वह्ने, त्वं न भासि न दीप्यसे । कथं यथा भवति आभासि यथा भवति । आ समन्ताद्भासनमाभासः स विद्यते यस्येत्याभासि यथा भवति । वह्ने, स्वामिन्युदिते सति त्वमतिशयेन दीप्तिमद्यथा भवति तथा न दीप्यस इत्यर्थः । दक्षिणतो यममभिनन्तुमागतमादिशति—हे यम, इमं महिषमश्वपार्श्वान्नयापसारय । किं कृत्वा । तातं सूर्यं नत्वा । अन्योन्यस्यैतेषामत्यन्तविरोधात् । नैरृत्यां दिशि राक्षसांश्च मानयति—हे राक्षसाः, यूयं स्वामिना वीक्षिताः स्थ दृष्टा भवथ । देवानामपकारकत्वेऽपि ते दिक्पालननियुक्तत्वाद्वीक्षिताः स्थेति संवादेन सुखिनः क्रियन्ते । भृत्यो हि स्वामिना यथार्हं संमानितोऽत्यन्तभक्त्या स्वाधिकारेऽप्रमत्तो भवति । पश्चिमायां वरुणमादिशति—हे प्रचेतः, सप्तीनश्वान्सिञ्च । जलोत्पादकत्वादसाविममेवादेशमर्हति । अनेन स्वामिना संमानितो भवति । भृत्यो हि स्वामिनः सकाशादादेशं लब्ध्वात्मानं कृतार्थं मन्यते । तदनन्तरप्राप्ये कर्मणि वायुमादिशति—हे पवन, जवं वेगं भज सेवस्व । केन [illegible]-

१. 'रक्षसाः' इति पाठः. २. 'नो भासि' इति पाठः.

सेका वाजिनस्त्वत्पार्श्वाच्छैत्यमनुभवन्तः सुखेनैव व्रजन्तीति भावः । उत्तरस्यां दिशि कुबेरमाभाषते—वित्तं द्रव्यं पातीति वित्तपस्तमामन्त्र्य संभाषते—हे वित्तप धनद, त्वमावेदितः कथितो मया स्वामिनः । यथायं स्वाधिकारेऽप्रमत्तः संस्त्रैलोक्यस्थितेरेको हेतुर्निधिद्वयस्यापि शङ्खपद्माख्यस्य पालने नियुक्तोऽतोऽसौ गौरवाद्भगवतो रवेरावेद्यत एव । ईशान्यां शर्वं दृष्ट्वा हे शर्व, त्वां वन्दे । अष्टमूर्तित्वाद्रविरेव शर्वः । तथा चोक्तम्—'आदित्यं च शिवं विद्याच्छिवमादित्यरूपिणम् । [उभयोरन्तरं नास्ति आदित्यस्य शिवस्य च ॥]' इति ॥

पाशानाशान्तपालाद्रुण वरुणतो मा ग्रहीः प्रग्रहार्थं
तृष्णां कृष्णस्य चक्रे जहिहि नहि रथो याति मे नैकचक्रः ।
योक्तुं युग्यं किमुच्चैःश्रवसमभिलपस्यष्टमं वृत्रशत्रो-
स्त्यक्तान्यापेक्षविश्वोपकृतिरिति रविः शास्ति यं सोऽवताद्वः ॥ ५९ ॥

रविर्यं शास्ति शिक्षयति सोऽरुणो वो युष्मानवतु रक्षतु । यथा शास्ति तं प्रकारं दर्शयन्नाह—पाशानाशान्तपालादित्यादि । आशान्तमपरां दिशं पालयतीत्याशान्तपालस्तस्माद्वरुणतो वरुणात् हे अरुण, पाशान्मा ग्रहीर्मा गृहाण । सर्वलकाराणामपवादः 'माङि लुङ्' । किमर्थं प्रग्रहार्थं रश्मिनिमित्तम् । सारथित्वात् । सारथिर्यद्यदुपयुज्यते तत्सर्वमभिलपति । आदित्यस्तु तत्सर्वं निषेधयति । किं च, कृष्णस्य विष्णोश्चक्रे तृष्णामभिलापं जहिहि । कुतः । न हि रथो याति मे नैकचक्रः । हि यस्मान्मम रथो न याति । कथम् । एकचक्रः । इत्येतन्न । अपि तु यात्येव । प्रतिषेधतया प्रकृतार्थावगतिः । किंच, वृत्रशत्रोरिन्द्रसकाशादुच्चैःश्रवसमश्वविशेषमष्टमं योक्तुं किमभिलपसि मा त्वमभिलषेत्यर्थः । किंभूतम् । युग्यम् । युगमर्हतीति युग्यस्तम् । किंभूतो रविरित्याह—त्यक्ता अन्यापेक्षविश्वोपकृतिर्जगदुपकरणं येन स त्यक्तान्यापेक्षविश्वोपकृतिः । जगदुपकरणं प्रति जनं कंचनाशापालादिकं सहायं नापेक्षत इत्यर्थः ॥

नो मूर्छाछिन्नवाञ्छः श्रमविवशवपुर्नैव नाप्यास्यशोषी
पान्थः पथ्येतराणि क्षपयतु भवतां भास्वतोऽग्रेसरः सः ।
यः संश्रित्य त्रिलोकीमटति पटुतरैस्ताप्यमानो मयूखै-
राराद्रामलेखामिव हरितमणिश्यामलामश्वपङ्क्तिम् ॥ ६० ॥

मूर्छया मोहेन च्छिन्नापनीता वाञ्छा इच्छा यस्य स तथोक्तः । स तथा नो भवति नास्ति । इतरः पान्थस्तु तथाभूत एव भवति । किं च, श्रमविवशवपुर्नैव । श्रमेण विवशमनवस्थं वपुर्यस्य स तथोक्तः । तथा नैव । नाप्यास्यशोषी । आस्यशोषो मुखशोषो विद्यते यस्य स आस्यशोषी । अस्यास्यमपि न शुष्यति । एवंविधः श्रीसूर्यस्याग्रेसरः

1. 'त्वाष्ट्रयोः' इति पाठः. 2. 'हरितरुण' इति पाठः.

पान्थोऽरुणो युष्माकं पथ्येतराण्यहितानि क्षपयतु । किंभूतः स क इत्याह—योऽरुणोऽश्वपङ्क्तिं संश्रित्य नित्यं त्रिलोकीमटव्यतिक्रामति । किंभूतो यः । पटुतरैस्तीक्ष्णैः किरणैस्ताप्यमानः । कीदृशीमश्वपङ्क्तिम् । समीपवर्तिनीमारामलेखामुपवनलेखामिव । यथा कश्चित्पान्थः किरणैस्ताप्यमानः समीपस्थितामुपवनतरुच्छायामाश्रित्य पन्थानमत्येति तथायमरुणः ॥

सीदन्तोऽन्तर्निमज्जज्जडखुरमुसलाः सैकते नाकनद्याः
स्कन्दन्तः कंदरालीः कनकशिखरिणो मेखलासु स्खलन्तः ।
दूरं दूर्वास्थलोत्का मरकतदृषदि स्थास्नवो यत्र याताः
पूष्णोऽश्वाः पूरयंस्तैस्तदवतु जवनैर्हुंकृतेनाग्रगो वः ॥ ६१ ॥

इत्यरुणवर्णनम् ।

पूष्णोऽग्रगोऽरुणो वो युष्मानवतु रक्षतु । किं कुर्वन् । पूरयन्पूर्णं कुर्वन् । यत्स्थानमश्वा न याता न लङ्घितवन्तस्तत्स्थानं हुंकारेण हेतुना जवनैस्तैरेव पूरयन् । किं कुर्वन्तो न याताः । सीदन्तः सन्ना भवन्तः । क्व । सैकते सिकताप्रदेशे नाकनद्याः स्वर्धुन्याः । अन्तर्निमज्जज्जडखुरमुसलाः । अन्तर्मध्ये निमज्जन्ति प्रविशन्ति जडानि खुरमुसलानि येषां ते तथोक्ताः । अत एव सीदन्तः । स्कन्दन्त उल्लङ्घयमानाः कंदरालीः कनकशिखरिणो मेरोः । मेखलासु कटकेषु स्खलन्तो गतिवैक्लव्यमापद्यमानाः । किं च, मरकतदृषदि मरकतशिलायां स्थास्नवः स्थातारः । दूरमत्यर्थं दूर्वास्थलोत्काः ॥ इत्यरुणवर्णनव्याख्यानम् ॥

पीनोरःप्रेरिताश्वैश्चरमखुरपुटाग्रस्थितैः प्रातरद्रा-
वादीर्घाङ्गैरुदस्तो हरिभिरपगतासङ्गनिःशब्दचक्रः ।
उत्तानानूरुमूर्धावनतिहठभवद्विप्रतीपप्रणामः
प्राह्णे श्रेयो विधत्तां सवितुरवतरन्व्योमवीथीं रथो वः ॥ ६२ ॥

सवितुर्भानो रथः स्यन्दनो वो युष्मभ्यं श्रेयः पुण्यं विधत्तां कुरुतात् । अवतरन्नधिरोहन् । व्योमवीथीं व्योममार्गम् । प्राह्णे पूर्वाह्णे । उदस्त उत्क्षिप्तः । हरिभिरश्वैः । किंभूतैः । पीनोरःप्रेरिताश्वैरुपचितवक्षोनुन्नयनैः । चरमखुरपुटाग्रस्थितैः पाश्चात्यशफाग्रप्रान्तावस्थितैः । क्व । प्रातरद्रौ मेरौ । पुनरपि किंभूतैः । आदीर्घाङ्गैरायतशरीरैः । किंभूतोऽसौ । अपगतासङ्गनिःशब्दचक्रः । अपगतासङ्गं सङ्गरहितमत एव निःशब्दं चक्रं यस्य स तथोक्तः । अपि च, उत्तानो योऽनूरुस्तस्य यो मूर्धा तस्यावनतिस्तया हठेन भवन् विप्रतीपो विपरीतः प्रणामो यस्य स उत्तानानूरुमूर्धावनतिहठभवद्विप्रतीपप्रणाम इति ॥

---

१. 'प्रेरितान' इति पाठः. २. 'हुंकृतैस्तर्णात्' इति पाठः. ३. 'पुंसि सुमने-नम्' इति पाठः. ४. 'स्थितो' इति पाठः.

ध्वान्तौघध्वंसदीक्षाविधिपटु वहता प्राक्सहस्रं कराणा-
मर्यम्णा यो गरिम्णः पदमतुलमुपानीयताध्यासनेन ।
स श्रान्तानां नितान्तं भरमिव मरुतामक्षमाणां विसोढुं
स्कन्धात्स्कन्धं व्रजन्वो वृजिनविजितये भास्वतः स्यन्दनोऽस्तु॥६३॥

भास्वतो भानोः स्यन्दनो रथो वो युष्माकं वृजिनविजियते पापावजयायास्तु भूयात्। किंभूतोऽसौ। अर्यम्णा सूर्येण गरिम्णो गौरवस्य पदमुपानीयत नीतः। अध्यासनेनाध्यरोहणेन (उपवेशनेन) कृत्वा। अतुलमसदृशमपरिमाणं वा। प्राक् पूर्वम्। किं कुर्वता। कराणां किरणानां भासां सहस्रं दशशतीं वहता धारयता। कीदृशम्। ध्वान्तौघध्वंसदीक्षाविधिपटु। ध्वान्तं तिमिरं तस्यौघः संघातस्तस्य ध्वंसो विनाशः स एव दीक्षा तस्या विधिस्तत्र पटु कल्पम्। किं कुर्वन्। व्रजन्गच्छन्। स्कन्धात्स्कन्धम्। केषाम्। मरुतां वायूनाम्। वायुस्कन्धा हि रविरथाधीनाः किलाधाराः। ते च बहवः। तान्क्रमेणोल्लङ्घमानो भगवान्मेरुं प्रदक्षिणीकरोतीत्यागमविदः। एतदेवोत्प्रेक्षते—श्रान्तानां नितान्तमत्यर्थं भरं भारं सोढुमक्षमाणामधिकं धर्तुमसमर्थानामिव। इवोत्प्रेक्षायाम्। भारासहनेऽक्षमत्वे च गौरवपदनयनं हेतुः। यथैको भारस्यातिगुरुतयैकेन नेतुं न शक्यते स बहुभिः पर्यायेण नीयमानः स्कन्धात्स्कन्धं व्रजति तद्वदयमपि। एष लोकव्यवहारोऽत्र दर्शयितुं साभिप्रायेण विवक्षितः॥

योऽङ्कीभूतान्युगस्य ग्रसितुमिव पुरो दन्दशूकान्दधानो
द्वेधाव्यस्ताम्बुवाहावलिविहितबृहत्पक्षविक्षेपशोभः ।
सावित्रः स्यन्दनोऽसौ निरतिशयरयप्रीणितानूरुरेनः-
क्षेपीयो वो गरुत्मानिव हरतु हरीच्छाविधेयप्रचारः ॥ ६४ ॥

असौ स्यन्दनो रथ एनः पापं वो युष्माकं हरत्वपनयतु। किमीयः। सावित्रो भानवीयः। क्षेपीयः क्षिप्रतरम्। क इव। गरुत्मानिव गरुडो यथा। निरतिशयरयप्रीणितानूरुः। निरतिशयोऽनतिशयनीयो रयो वेगस्तेन प्रीणितोऽनूरुररुणो येन स तथोक्तः। गरुत्मानप्येवम्। अरुणो हि तस्य भ्राता। स तदीयेन निरतिशयेन रंहसा प्रीयते। तथा हरीच्छाविधेयप्रचारः। हरयो वाजिनस्तेषामिच्छा तद्विधेयस्तत्कार्यः प्रचारो गतिर्यस्य स तथोक्तः। अन्यत्र हरिर्विष्णुस्तदिच्छाविधेयस्तदिच्छाधीनः प्रचारो यस्येति योज्यम्। किं कुर्वन्। दन्दशूकान्फणिनो दधानो बिभ्राणः। योऽङ्कीभूतान्योऽङ्कभावमवाप्तान्। युगस्य...... । पुरोऽग्रतः ग्रसितुमिव। गरुत्मानपि खादितुं दन्दशूकान्पुरो धत्ते। किंच, द्वेधा व्यस्ता येऽम्बुवाहास्तेषामावलिविहितौ बृहन्तौ पक्षौ तयोर्विक्षेपस्तेन शोभा यस्य स तथोक्तः। अन्यत्र द्वेधा व्यस्ता अम्बुवाहावलयो घनावल-

---

1. 'गुरु' इति पाठः. २. 'द्राक्' इति पाठः.

यः । काभ्याम् । गरुत्मत्पक्षाभ्याम् । तौ च तौ विहितबृहत्पक्षौ च तयोर्विक्षेपस्तेन शोभा यस्येति ॥

एकाह्नैव दीर्घां त्रिभुवनपदवीं लङ्घयन्यो लघिष्ठः
पृष्ठे मेरोर्गरीयान्दलितमणिदृषत्त्विषि पिंषञ्शिरांसि ।
सर्वस्यैवोपरिष्टादथ च पुनरधस्तादिवास्ताद्रिमूर्ध्नि
ब्रध्नस्याव्यात्स एवं दुरधिगमपरिस्पन्दनः स्यन्दनो वः ॥ ६५ ॥

ब्रध्नस्य गभस्तिमतः स्यन्दनो रथो वो युष्मानव्याद्रक्षतु । एवमनया भङ्ग्या दुरधिगमपरिस्पन्दनो दुरवधारव्यापारः । तदेव दर्शयते—एकाह्नैव एकदिनेनैव दीर्घामायतां त्रिभुवनपदवीं त्रिलोकमार्गं लङ्घयन् यो लघिष्ठो लघुतरः । एतेन शीघ्रगतिमत्ता दर्शिता । तथा गरीयान्गुरुतरः । पृष्ठे मेरोर्देवालयस्य । किं कुर्वन् । पिंषंश्चूर्णयन् । शिरांसि शिखराणि । कीदृशानि । दलिता खण्डिता या मणिदृषदस्ताभिस्त्विषो येषु । यदि वा दलिता इतस्ततो विक्षिप्ता मणिदृषत्त्विषो येषु तानि तथोक्तानि । एतेन गुरुतरता ख्यापिता । यः सर्वस्य निःशेषस्य लोकस्योपरिष्टादुपरि पूज्यत्वेन दिक्संबन्धेन वा । अथ च पुनर्भूयोऽप्यधस्तादिवाध इव । अस्ताद्रिमूर्धन्यस्तपर्वतमस्तके । एतेनाधउपरिभावो दर्शितः । एकान्ततः परमार्थतो न लघुर्न गुरुर्नोपरि नाध इति व्यपदेष्टुं न शक्यते । अत एव दुरधिगमपरिस्पन्दन इत्युक्तम् ॥

धूर्ध्वस्ताग्र्यग्रहाणि ध्वजपटपवनान्दोलितेन्दूनि दूरं
राहौ ग्रासाभिलाषादनुसरति पुनर्दत्तचक्रव्यथानि ।
श्रान्ताश्वश्वासहेलाधुतविबुधधुनीनिर्झराम्भांसि भद्रं
देयासुर्वो दवीयो दिवि दिवसपतेः स्यन्दनप्रस्थितानि ॥ ६६ ॥

भद्रं कल्याणं वो युष्मभ्यं देयासुर्दिशन्तु । स्यन्दनप्रस्थितानि रथगतानि । स्यन्दनो रथः । दिवसपतेर्दिनपतेः । स्यन्दनप्रस्थितानीति सापेक्षत्वेऽपि समासो गमकत्वात् । रथप्रस्थितानि । दवीयो दिवि दूरतरगगने । भद्रदानक्रियाविशेषणं वा दवीय इति । तदा दवीयोऽतीवतरामित्यर्थः । तान्येव विशेष्यन्ते—धूर्ध्वस्ताग्र्यग्रहाणि धुरा ध्वस्ता विक्षिप्ता अग्र्या अग्रे भवा ग्रहाः कुजादयो यैस्तानि तथोक्तानि । किंच । ध्वजपटपवनेन ध्वजांशुकमरुता आन्दोलितो विकम्पित इन्दुश्चन्द्रमा येषु तानि । तथा दूरमतीवतरं राहौ तमसि पुनर्भूयोऽपि दत्ता चक्रेण व्यथा भयं यैस्तानि । ग्रासाभिलाषादनुसरति । अनुसरंश्चक्रमपेक्षमाणस्ततो बिभेति । श्रान्ताश्वश्वासहेलाधुतविबुधधुनीनि धुतानि कम्पितानि विबुधधुनीनिर्झराम्भांसि सुरनदीप्रस्रवणजलानि येषु तान्येवंभूतानि ॥

---

१. अयं श्लोकः पुस्तकान्तरे एकोनसप्ततितमो वर्तते. २. 'दूरम्' इति पाठः.
३. 'दूरात्' इति पाठः.

अक्षे रक्षां निबध्य प्रतिसरवलयैर्योजयन्त्यो युगाग्रं
धूःस्तम्भे दग्धधूपाः प्रहितसुमनसो गोचरे कूबरस्य ।
चर्चाश्चक्रे चरन्त्यो मलयजपयसा सिद्धवध्वस्त्रिसंध्यं
वन्दन्ते यं द्युमार्गे स नुदतु दुरितान्यंशुमत्स्यन्दनो वः ॥ ६७ ॥

अंशुमत्स्यन्दनो भास्वद्रथः स वो युष्माकं पापानि दुरितानि नुदत्वपनयतु । यं सिद्धवध्वः सिद्धस्त्रियो वन्दन्ते नमस्यन्ति । द्युमार्गे विहायसि । त्रिसंध्यं त्रिकालम् । तिस्रः संध्या वन्दन्ते । क्रियाविशेषणम् । किं कृत्वा । रक्षां मङ्गलविशेषं निबध्य बद्ध्वा । अक्षे रथावयवविशेषे । प्रतिसरवलयैः कौतुकोर्णाकङ्कणैर्योजयन्त्यो युगाग्रं युगप्रान्तम् । पुनरपि स्तम्भ इव धूर्धूःस्तम्भस्तत्र दग्धधूपाः । प्रहितसुमनसो विक्षिप्तपुष्पाः । क्व । गोचरे विषये कूबरस्य युगंधरोद्देशस्य । चर्चाः स्थासकान् चक्रे पादे ददत्यो यच्छन्त्यः । केन । मलयजपयसा चन्दनाम्भसा ॥

उत्कीर्णस्वर्णरेणुद्रुतखुरदलिता पार्श्वयोः शश्वदश्वै-
रश्रान्तभ्रान्तचक्रक्रमनिखिलमिलन्नेमिनिम्ना भरेण ।
मेरोर्मूर्धन्यघं वो विघटयतु रवेरेकवीथी रथस्य
स्वोष्मोदक्ताम्बुरिक्तप्रकटितपुलिनोद्धूसरा स्वर्धुनीव ॥ ६८ ॥

रवेरादित्यस्य स्यन्दनस्यैकवीथी एकमार्गो वो युष्माकमघं पापं विघटयतु । केव । स्वर्धुनीव गङ्गेव । किंभूतासौ । द्रुतखुरदलिता चटुलशफदारिता पार्श्वयोः । कैः । अश्वैः । शश्वदनवरतम् । कथम् । उत्कीर्णः स्वर्णरेणुर्यत्र दलने तत् । उत्कीर्णस्वर्णरेणवश्च ते द्रुताः खुराश्चेति (वा) विशेषणसमासः । किं च, अश्रान्तभ्रान्तचक्रक्रमनिखिलमिलन्नेमिनिम्ना । अश्रान्तमनवरतं यद्भ्रान्तं चक्रं चरणस्तस्य क्रमः क्रमणं तेन निखिला समग्रा मिलन्ती घटमाना या नेमिश्चक्रधारा तया निम्ना अवनता । भरेण प्राग्भारेण हेतुना । मेरोर्देवाचलस्य मूर्ध्नि शिरसि । किं च, स्वोष्मणा उदक्तमाकृष्टं तच्च तदम्बु चेति तेन रिक्तं रिक्तत्वादेव प्रकटितं तच्च तत्पुलिनं च तेनोद्धूसरा पाण्डुः । स्वर्धुन्यपि स्वोष्मोदक्ताम्बुरिक्तप्रकटितपुलिनोद्धूसरा भवति ॥

नन्तुं नाकालयानामनिशमनुयतां पद्धतिः पङ्क्तिरेव
क्षोदो नक्षत्रराशेरदयरयमिलच्चक्रपिष्टस्य धूलिः ।
हेषाह्लादो हरीणां सुरशिखरिदरीः पूरयन्नेमिनादो
यस्याव्यात्तीव्रभानोः स दिवि भुवि यथा व्यक्तचिह्नो रथो वः ॥ ६९ ॥

---

१. 'चर्चा' इति पाठः. २. 'रेणुद्रुत' इति पाठः. ३. 'स्वोष्मोदस्ताम्बु' इति पाठः. ४. 'अनयतां' इति पाठः. ५. 'नादो' इति पाठः.

तीव्रभानोरादित्यस्य रथो वो युष्मानव्यात्पायात् । दिवि खे व्यक्तचिह्ना विस्पष्टलक्ष्मा । भुवि यथा भूम्यामिव । सा यस्य नाकालयानां सुसदां परिवर्तितरिव पद्धतिः पदवी । किंभूतानाम् । अनुयतामनुगच्छताम् । नन्तुं प्रणामाय । अनिशमहर्निशम् । किं च, नक्षत्रराशेर्भचक्रस्य क्षोदश्चूर्ण एव धूलिः परागः । अदयस्याभिलक्षेमिपिष्टस्य प्रखरवेगसंसक्तचक्रधारानिर्दलितस्य । हेषाह्लादो हेषाध्वनिः । हरीणां वाजिनां यः स एव नेमेर्नादः प्रतिध्वानः सुरशिखरिदरीः पूरयन् देवाचलकंदराणि पूर्णाः कुर्वन् । अथ वा हेषाह्लादो हरीणां सुरशिखरिदरीः पूरयन्नेमिनादश्चेति सुरशिखरिदरीः पूरयन्यस्येति पृथगेव संबन्धनीयम् । भुवि यानि चिह्नानि धूलिहेषानेमिध्वनयस्तान्यनया भङ्ग्या वियत्यपि दर्शितानि ॥

निःस्पन्दानां विमानावलिविततदिवां देववृन्दारकाणां
वृन्दैरानन्दसान्द्रोद्यममपि वहतां विन्दतां वन्दितुं नो ।
मन्दाकिन्याममन्दः पुलिनभृति मृदुर्मन्दरे मन्दिराभे
मन्दारैर्मण्डितारं दधदरि दिनकृत्स्यन्दनः स्तान्मुदे वः ॥ ७० ॥

दिनकृतः स्यन्दनो रविरथो वो युष्माकं मुदे हर्षाय स्ताद्भूयात् । किं कुर्वन् । दधद्बिभ्रत् । अरि चक्रम् । मण्डितारं विभूषितारम् । कैः । मन्दारैर्वृक्षविशेषपुष्पैः । यथाऽमन्दः शीघ्रो मन्दाकिन्यां पुलिनभृति पुलिनभाजि । देववृन्दारकाणां सुरमुख्यानां वन्दितुं स्तोतुं विन्दतां लभमानानां नो नेति । किं कुर्वताम् । वहतां धावताम् । कैः । वृन्दैः संघातैः पूगशः । निःस्पन्दानां श्रान्तानाम् । विमानावलिविततदिवां विमानश्रेणिप्रच्छादितनभसाम् । कथं वहताम् । आनन्दसान्द्रोद्यमं संहर्षप्रभूतोत्साहम् । मन्दरे पर्वतविशेषे मृदुर्मन्दः । मन्दिराभे नगरानुकारे । मन्दिरशब्दो नगरैकदेशेऽप्युपचारात्समुदाये वर्तते । नगरं हि स्वपुटत्वाद्रथस्य वेगं स्खलयति । ततस्तत्र मन्दता गुरुत्वे । देववृन्दारकाणां वृन्दैः कर्तृभिर्मन्दारैः करणभूतैर्मण्डितारमिति च ॥

चक्री चक्रारपङ्क्तिं हरिरपि च हरीन्धूर्जटिर्धूर्ध्वजान्ता-
नक्षं नक्षत्रनाथोऽरुणमपि वरुणः कूबराग्रं कुबेरः ।
रंहः संघः सुराणां जगदुपकृतये नित्ययुक्तस्य यस्य
स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचेः सोऽवतात्स्यन्दनो वः ॥ ७१ ॥

अहिमरुचेरादित्यस्य स्यन्दनो रथो वो युष्मानवतादवतु । यस्यान्वहे प्रतिदिनमेतदेतदवयवं स्तौति । प्रीतिप्रसन्नः प्रीतितुष्टः । तदेव दर्शयति—चक्री विष्णुश्चक्रारपङ्क्तिं स्तौतीति संबन्धः । हरिरिन्द्रो हरीनश्वान् । धूर्जटिर्महादेवो धूर्ध्वजान्तान्धुर-

1. 'वलितदिवां' इति पाठः. 2. 'मन्दराभे' इति पाठः. 'मन्दरः स्वर्गः' इति निघण्टुशेषः. तेन स्वर्गाभे इत्यर्थः. 3. 'रन्ध्रः' इति पाठः.

जान्तान्ध्वजाग्रान् । अक्षं चक्राधारकाष्ठं नक्षत्रनाथश्चन्द्रमाः । अरुणमनूरुं वरुणः पाशभृत् । कूबराग्रं युगंधरप्रान्तं कूबेर ऐलविलः । रंहो वेगं संघः समूहः पूगः सुराणां देवानाम् । नित्ययुक्तस्य नित्योद्यतस्य जगदुपकृतये विश्वोपकाराय ॥

नेत्राहीनेन मूले विहितपरिकरः सिद्धसाध्यैर्मरुद्भिः
पादोपान्ते स्तुतोऽलं वलिहरिरभसा कर्षणाबद्धवेगः ।
भ्राम्यन्व्योमाम्बुराशावशिशिरकिरणस्यन्दनः संततं वो
दिश्याल्लक्ष्मीमपारामतुलितमहिमेवापरो मन्दराद्रिः ॥ ७२ ॥

इति रथवर्णनम् ।

अशिशिरकिरणस्यन्दनस्तीव्रमयूखरथो वो युष्मभ्यं संततमनवरतं लक्ष्मीं श्रियं दिश्याद्दद्यात् । अपारामनल्पीयसीम् । अतुलितमहिमा अपरिमितमाहात्म्यः । किं कुर्वन् । भ्राम्यन्व्योमाम्बुराशौ नभःपयोधौ । क इव । मन्दराद्रिरिव मन्दराचल इव । अपरोऽन्यः । तयोः साम्यं दर्श्यते—नेत्रा सारथिना हीनेन विकलेन मूलेऽधोभागे विहितपरिकरः कृतोद्यमः । मन्दरेऽपि नेत्रं वेष्टनरज्जुः । अहीनो नागराजः । नेत्रं च तदहीनश्चेति समासः । यदि वा नेत्रभूतोऽहीनः । शाकपार्थिवादित्वान्मध्यमपदलोपी समासः । तेन विहितपरिकरः कृतवेष्टनः । क । मूले मूलप्रदेशे । किं च, स्तुतो वन्दितः । सिद्धसाध्यैर्देवविशेषैः । पादोपान्ते चरणसमीपे स्थितैः । तस्य पूज्यत्वात् । मन्दरोऽपि तैः स्तुतो वर्णितः । तस्यासन्नत्वात् । पादोपान्ते प्रत्यन्तनगर(पर्वत)समीपे । मरुद्भिर्देवैर्वायुभिर्वा । अलमत्यर्थम् । किं च बलिनो बलवन्तस्ते च ते हरयश्च तेषां रभसो हेला तेनाकर्षणं तेनाबद्धो गृहीतो वेगो यस्य स तथोक्तः । इतरस्तु बलिर्वैरोचनिः हरिः शतमखस्तयो रभस इति । शेषं समानम् । मन्दरविषये व्योमवदम्बुराशौ विस्तीर्णत्वादिति योज्यम् । संततमिति भ्रमणस्य विशेषणम् ॥ इति रथवर्णनव्याख्यानम् ॥

यज्ज्यायो बीजमह्नामपहततिमिरं चक्षुषामञ्जनं य-
द्द्वारं यन्मुक्तिभाजां यदखिलभुवनज्योतिषामेकमोकः ।
यद्वृष्ट्यम्भोनिधानं धरणिरससुधापानपात्रं महद्य-
द्दिश्यादीशस्य भासां तदविकलमलं मङ्गलं मण्डलं वः ॥ ७३ ॥

तदेवंभूतं मण्डलं भासामीशस्य भानोः संबन्धि वो युष्मभ्यं मङ्गलं कल्याणमविकलं संपूर्णमलमत्यर्थं दिश्यात् । तदेव निरूप्यते—यदह्नां दिनानां बीजं कारणम् । ज्यायः प्रशस्यतरम् । यच्चक्षुषां नेत्राणामञ्जनं प्रकाशकम् । अपहततिमिरं विनाशितान्धकारम् । अञ्जनमपि चक्षुषां तिमिरं रोगविशेषमपहरति । यन्मुक्तिभाजां योगिनां

१. 'अतुल्यां' इति पाठः. २. 'ज्यायो यत्' इति पाठः. ३. 'अपहत' इति पाठः. ४. 'देवस्य भानोः' इति पाठः. ५. 'तदधिकममलं मण्डलं मङ्गलं' इति पाठः.

द्वारम् । ते हि सूर्यमण्डलद्वारेण मुक्तिं प्रयान्ति । यदखिलभुवनज्योतिषां [1]सकलजगत्तेजसामेकमद्वितीयमतुलमाश्रयः । यद्वृष्टया हेतुभूतयाम्भसां पानीयानां निधानमाश्रयः । यद्धरणिरससुधापानपात्रं पृथिव्युदकामृतपानपात्रम् । महद्बृहत् ॥

वेलावर्धिष्णु सिन्धोः पय इव खमिवार्धोद्गताग्र्यग्रहोडु
स्तोकोद्भिन्नस्य चिह्नप्रसवमिव मधोरास्यमस्यन्मनांसि ।
प्रातः पूष्णोऽशुभानि प्रशमयतु शिरःशेखरीभूतमद्रेः
पौरस्त्यस्योद्गभस्तिस्तिमिततमतमःखण्डनं मण्डलं वः ॥ ७४ ॥

पूष्णो रवेर्मण्डलं वो युष्माकमशुभानि दुरितानि प्रशमयतु ध्वंसयतु । प्रातः प्रभाते । अद्रेः पर्वतस्य शिरःशेखरीभूतं मूर्धालंकारभूतम् । पुरस्तात्पूर्वस्यां दिशि भवः पौरस्त्यः प्राच्यस्तस्य । उद्गभस्ति उदंशु । प्रकृष्टं स्तिमितं स्तिमिततमं बहुलतमं यत्तमस्तिमिरं तस्य ध्वंसनम् । तदेव विशेषयितुमाह—यत्सिन्धोः पयोधेः पय इव जलमिव वेलावर्धिष्णु । वेलया कालमुहूर्तसमयेन वर्धनशीलम् । उदधेरपि पयोवेला जलवृद्धिं तथा वर्धिष्णु भवति । अत्र वेला समुद्रक्षोभः । किं च, खमिव नभ इव अर्धोद्गताग्र्यग्रहोडु मनागुद्भिन्नप्रधानग्रहनक्षत्रम् । अन्यत्र, अर्धोद्गता अग्रभवाः पौरस्त्या ग्रहा नक्षत्राणि यस्य तत्तथोक्तम् । तत्तेजसाभिभूतत्वात्किंचिदुपलभ्यमाना उक्ताः । किं च मधोरास्यमिव वसन्तस्य प्रवेश इव । किंभूतम् । स्तोकोद्भिन्नस्याचिह्नप्रसवमीषदुद्भिन्नजिह्नचिह्नाविर्भावम् । अन्यत्र स्तोकमुद्भिन्नरुच (?) आविर्भावो यत्र तत्स्वचिह्नं लक्षणं यस्येति । प्रसवं पुष्पं यत्र मध्वास्ये (अन्यत्र) । किं कुर्वन् । अपहरन्मनांसि चेतांसि । जनानामित्यध्याहारः ॥

प्रत्युप्तस्तप्तहेमोज्ज्वलरुचिरचलः पद्मरागेण येन
ज्यायः किंजल्कपुञ्जो यदलिकुलशितेरम्बरेन्दीवरस्य ।
कालव्यालस्य चिह्नं महिततममहोमूर्ध्नि रत्नं महद्य-
द्दीप्तांशोः प्रातरव्यात्तदविकलजगन्मण्डनं मण्डलं वः ॥ ७५ ॥

तदेवंभूतं दीप्तांशोर्भानोः संबन्धि मण्डलं वो युष्मानव्याद्रक्षतु । प्रातरुषसि । किंभूतम् । अविकलं जगन्मण्डनं विश्वालंकारः । पुनरपि कीदृशं तत् । येन मण्डलेनाचलः पर्वतः प्रत्युप्तः प्रोतः । पद्मरागेण पद्मभासा । कीदृशः । तप्तहेमोज्ज्वलरुचिरस्तम[illegible]नदीप्तिः । पद्मरागेणेति शब्दच्छलेन पद्मरागमणितां दर्शयति । किंभूतं यत् । ज्यायः प्रशस्यतरम् । किंजल्कपुञ्जः पद्मराग(केसर)राशिरिव । कस्य । अम्बरेन्दीवरस्य गगनकुवलयस्य । अलिकुलसितेर्भ्रमरवृन्दनीलस्य । चिह्नं शिरोरत्नं (कालव्यालस्य) अहोमूर्ध्नि

1. 'महांसि' इति पाठः.

दिवसशिरसि । रत्नं मणिः । महिततमं पूजितम् । महद्बृहत् । 'यदेतन्मण्डलं तपति' इति श्रुतिरित्यपेक्षते ॥

कत्राता तारकाणां पतति तनुरवश्यायबिन्दुर्यथेन्दु-
विंद्राणा दृक्स्मरारेरुरसि मुररिपोः कौस्तुभो नोद्गभस्तिः ।
वह्नेः सापह्नवेव द्युतिरुदयगते यत्र तन्मण्डलं वो
मार्तण्डीयं पुनीताद्दिवि भुवि च तमांसीव मुष्णन्महांसि ॥ ७६ ॥

मार्तण्डीयं सावित्रं मण्डलं वो युष्मान्पुनीतात्पुनातु । किं कुर्वन् । मुष्णन्खण्डयन् । कानि । महांसि तेजांसि । कानीव । तमांसीव तिमिराणि यथा । क्व । दिवि खे । किं तत्रैव । न । भुवि च भूमौ च । यत्रोदयगते उदयस्थे कत्राता तारकाणां को रक्षिता नक्षत्राणाम् । न कश्चिदित्यर्थः । किं पुनः कारणमित्याह—तत्र पतति ध्वंसते इन्दुश्चन्द्रः । क इव । अवश्यायबिन्दुर्यथा तुषारकणवत् । कथंभूतः । तनुरल्पः । इन्दुर्हि तारकाणां नाथः । तत्र पतति कत्रायते । किं च, विद्राणा म्लाना दृग्दृष्टिः स्मरारेः शंभोः । मुरारेरुरसि विष्णोर्वक्षसि कौस्तुभो मणिविशेषो नोद्गभस्ति नोन्मयूखः । अपि च वह्नेरग्नेः सापह्नवेव सापलापेव द्युतिः कान्तिः । एतेन सर्वतेजसां मोषः कथितः । उदयगते यत्रेति प्रत्येकं मेलनीयम् ॥

यत्प्राच्यां प्राक्चकास्ति प्रभवति च यतः प्राच्यसावुज्जिहाना-
दिद्धं मध्ये यदह्नो भवति ततरुचा येन चोत्पाद्यतेऽहः ।
यत्पर्यायेण लोकानवति च जगतां जीवितं यच्च तद्वो
विश्वानुग्राहि विश्वं सृजदपि च रवेर्मण्डलं मुक्तयेऽस्तु ॥ ७७ ॥

रवेरादित्यस्य तन्मण्डलं वो युष्माकं मुक्तये निर्वाणायास्तु भूयात् । वेदे 'एतस्मिन्मण्डले पुरुषोऽप्येतदमृतं यदेतदर्चिर्दीप्यते' इति श्रुतिः । अतोऽमृतायास्तु । यद्विश्वानुग्राहि जगदनुग्राहि विश्वं सृजदपि विश्वं विदधदपि । तदेव दर्श्यते—यत्प्राच्यामैन्द्र्यां प्राक्प्रथमं चकास्ति दीप्यते । यतश्चोज्जिहानादुद्गच्छतोऽसौ प्राची प्रभवति जयति । यदह्नो दिवसस्य मध्ये इद्धं दीप्तं भवति । येन च ततरुचा विस्तारितभासा उत्पाद्यते जन्यते अहो दिवसः । यच्च पर्यायेण लोकाञ्जगन्त्यवति रक्षति । यच्च जगतां जीवितं प्राणितम् । यथोक्तम्—'आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः । प्रजासौख्याच्च देवानां परा तृप्तिरिति श्रुतिः' ॥

शुष्यन्त्यूढानुकारा मकरवसतयो मारवीणां स्थलीनां
येनोत्तप्ताः स्फुटन्तस्तडिति तिलतुलां यान्त्यगेन्द्रा युगान्ते ।

१. 'सर्दीति' इति पाठः.

तच्चण्डांशोरकाण्डत्रिभुवनदहनाशङ्कया धाम कृच्छ्रा-
तसंहृत्यालोकमात्रं प्रलघु विदधतः स्तान्मुदे मण्डलं वः ॥ ७८ ॥

चण्डांशोस्तीव्रभानोर्मण्डलं वो युष्माकं मुदे हर्षाय स्तादृवतु । किं कुर्वतः । धाम विदधतः । प्रलघु स्तोकम् । आलोकमात्रं आलोको मात्रा प्रमाणं यस्य तत् । आलोक एव तिष्ठते । किं कृत्वा । संहृत्य संक्षिप्य संकोच्य । कृच्छ्रादायासात् । कया । अकाण्डत्रिभुवनदहनाशङ्कया । अकाण्डेऽकाले जगत्क्षोपभीत्या । अकाले त्रिभुवनदाहो मा संपद्यतामिति । येनोत्तप्ता मकरवसतयः समुद्राः शुष्यन्ति शोषं यान्ति । मार्गीणां स्थलीनां मरुस्थलीनामुदानुकारा धृतसादृश्याः । क्व । युगान्ते क्षयसमये । अगेन्द्राः राजपर्वताः पर्वतराजानो वा तिलतुलां यान्ति । अतितापात्तद्विनि स्फुटन्तः सतजन्मानि विशीर्यमाणाः ॥

उद्यद्द्यूद्यानवाप्यां बहुलतमतमःपङ्कपूरं विदार्य
प्रोद्भिन्नं पत्रपार्श्वेष्वविरलमरुणच्छायया विस्फुरन्त्या ।
कल्याणानि क्रियाद्वः कमलमिव महन्मण्डलं चण्डभानो-
रन्वीतं तृप्तिहेतोरसकृदलिकुलाकारिणा राहुणा यत् ॥ ७९ ॥

चण्डभानोस्तीव्रांशोः संबन्धि मण्डलं वो युष्माकं कल्याणानि क्रियात्करोतु । यत्कमलमिव पद्ममिव । महद्बृहत् । अन्वीतमनुसृतम् । राहुणा सैंहिकेयेन । अलिकुलाकारिणा भ्रमरव्रातविभ्रमेण । असकृदनेकवारम् । किं कुर्वन् । उद्यदुद्गच्छत् । द्यूद्यानवाप्यां द्यौरेवोद्यानं द्यूद्यानं द्यूद्यानस्य वापी गगनोपवनपुष्करिणी तत्रेति । कमलमपि गगनाकारतया(रायां) उपवनपुष्करिण्यामुद्गच्छति । किं कृत्वा । विदार्य भित्त्वा । किम् । बहुलतमतमःपङ्कपूरं घनतरतिमिरसंघातम् । कमलमपि घनतरतिमिरकलशो यः पङ्कौघस्तं विदार्योदेति । किं च, प्रोद्भिन्नं रञ्जितम् । पत्रपार्श्वेषु वाहनोपान्तेषु । अविरलं निरन्तरम् । अरुणच्छायया नूरुप्रभया । विस्फुरन्त्या प्रोल्लसन्त्या । कमलमप्यरुणच्छायया लोहितभासा पत्रोपान्तेषु दलोपान्तेषु भिन्नं रञ्जितं भवति । अलिकुलेनानुगतं सेवितं च । कस्य हेतोः । तृप्तिहेतोः । पानस्य (?) ॥

चक्षुर्दक्षद्विषो यन्न तु दहति पुरः पूरयत्येव कामं
नालं जुष्टं मरुद्भिर्यदिह नियमिनां यानपात्रं भवाब्धौ ।
यद्वीतश्रान्ति शश्वद्भ्रमदपि जगतां भ्रान्तिमभ्रान्ति हन्ति
ब्रध्नस्याव्याद्विरुद्धक्रियमथ च हिताधायि तन्मण्डलं वः ॥ ८० ॥

इति मण्डलवर्णनम् ।

१. 'कृत्वे' इति पाठः. २. 'आहृत्य' इति पाठः. ३. 'भवतु' इति पाठः. ४. 'पद्म' इति पाठः. ५. 'चण्डरश्मेः' इति पाठः. ६. 'न दहति नियतं' इति पाठः. ७. 'पुर' इति पाठः.

भ्रमस्य रवेर्मण्डलं वो युष्मानव्यादक्षतु। विरुद्धक्रियं विरुद्धव्यापारम्। अथ च हिताधायि तथापि हितकारि। तदेव दर्शयति—चक्षुर्दक्षद्विषो यत् लोचनं भगवतो महेश्वरस्य। न तु कामं दहति प्रत्युत पूरयतीति विरोधः। भगवतश्चक्षुषा कामो मन्मथो दग्धो न तु पूरितः। कामोऽभिलाषस्तं न दहति प्रत्युत पूरयतीति परिहारः। पुरोऽग्रतः। दक्षद्विपश्चक्षुरित्यागमविदः। नियमिनां योगिनां भवाब्धौ संसारसमुद्रे यन्मण्डलं यानपात्रं प्रवहणम्। यन्नगतां भ्रान्तिं मिथ्याज्ञानं हन्ति। भ्रमदपि पर्यटदपि। शश्वदनवरतम्। वीतभ्रान्ति विगतभ्रमम्। शश्वत्सदा गमनचिह्नाङ्क(?)मभ्रान्तीति विरोधः। भ्रान्तिशब्दोऽयं संशये। अभ्रान्ति असंशयमित्यदोषः॥ इति मण्डलवर्णनव्याख्या॥

सिद्धैः सिद्धान्तमिश्रं श्रितविधि विबुधैश्चारणैश्चाटुगर्भं
गीत्या गन्धर्वमुख्यैर्मुहुरहिपतिभिर्यातुधानैर्यतात्म।
सार्धं साध्यैर्मुनीन्द्रैर्मुदिततममनो मोक्षिभि[1]ः पक्षपाता-
त्प्रातः प्रारभ्यमाणस्तुतिरवतु रविर्विश्ववन्द्योदयो वः॥ ८१॥

विश्ववन्द्योदयो रविर्वो युष्मानवतु रक्षतु। कीदृशोऽसौ भगवान्। प्रातः प्रभाते प्रारभ्यमाणस्तुतिरुपक्रम्यमाणस्तोत्रः। कैः कैः कथं कथमित्याह—सिद्धैर्देवविशेषैः सिद्धान्तमिश्रं सिद्धान्तशब्देन सिद्धान्तोक्तविधिरुच्यते। उपचारात्। तन्मिश्रं तदुपेतम्। क्रियाविशेषणम्। एवं प्रतिपदं योज्यम्। तथा विबुधैर्देवैः श्रितविधि विधियुक्तम्। चारणैर्देववर्णकैश्चाटुगर्भं सचाटु गुरुगुणोद्गारसारम्। गन्धर्वमुख्यैर्विश्वावसुप्रभृतिभिर्गीत्या गानेन। मुहुः पुनः पुनरहिपतिभिः फणीन्द्रैः। यातुधानैः पिशाचैर्यतात्म। सार्धमर्धवत्साध्यैर्देवविशेषैः। मुनीन्द्रैर्महर्षिभिर्मुदिततममनः सातिशयहृष्टचित्तम्। मोक्षिभिः पक्षपातात्। योगिभिरात्मभावादिति भावः॥

भासामासन्नभावादधिकतरपटोश्चक्रवालस्य तापा-
च्छेदादच्छिन्नगच्छत्तुरगखुरपुटन्या[2]सनिःशङ्कटङ्कैः।
निःसङ्गस्यन्दनाङ्गभ्रमणनिकषणात्पातु वस्त्रिप्रकारं[3]
तप्तांशुस्तत्परीक्षापर इव परितः पर्यटन्हाटकाद्रिम्॥ ८२॥

तप्तांशुरादित्यो वो युष्मान्पात्ववतु। किं कुर्वन्। पर्यटन्परिसर्पन्। हाटकाद्रिं सुवर्णाचलम्। क इव। तत्परीक्षापर इव तस्य परीक्षा तन्निष्ठ इव। परितः समन्तात्। कथं तत्परीक्षापरः। त्रिप्रकारं त्रिधा। स्वर्णं हि तद्दाहच्छेदकषणैस्त्रिधा परीक्ष्यते तद्वदत्रापि दर्शयति—भासां चक्रवालस्य रुचां कदम्बकस्यासन्नभावान्निकटत्वाद्यस्तापस्त-

1. 'मोक्षभिः' इति पाठः. २. 'न्यस्त' इति पाठः. ३. 'त्रिप्रकारः' इति पाठः.

स्मात्तापात् । अनेन दाहं दर्शयति । कीदृशस्य । अधिकतरपटोरतिशयतीव्रस्य तस्य कोदात् । किं कृत्वा । अच्छिन्नमनवरतं गच्छन्तो वल्गन्तस्ते च ते तुरगाश्च तेषां खुरपुटास्तेषां न्यासास्त एव निःशङ्कटङ्कास्तैरिति । टङ्काः शस्त्रविशेषाः । अनेन च्छेदं दर्शयति । किं च, निःसङ्गस्यन्दनाङ्गभ्रमणनिकषणादपगतसङ्गरथाङ्गभ्रमोल्लिखनात् । अनेन निकषणमाह ॥

नो शुष्कं नाकनद्या विकसितकनकाम्भोजया भ्राजितं तु
प्लुष्टा नैवोपभोग्या भवति भृशतरं नन्दनोद्यानलक्ष्मीः ।
नो शृङ्गाणि द्रुतानि द्रुतममरगिरेः कालधौतानि धौता-
नीद्धं धाम द्युमार्गे म्रदयति दयया यत्र सोऽर्कोऽवताद्वः ॥ ८३ ॥

सोऽर्को रविरादित्योऽरुणपादो दयया वो युष्मानवताद्रक्षतु । यत्रेद्धं दीप्तं धाम तेजो द्युमार्गे वियत्पथे म्रदयति मृदु विदधति सति नाकनद्या नो शुष्कं गङ्गया न शुष्यते स्म । अपि तु भ्राजितं राजितमेव । किंभूतया । विकसितकनकाम्भोजया विकस्वरस्वर्णकमलया । किं च प्लुष्टा नैव न दग्धा नन्दनोद्यानलक्ष्मीर्नन्दनोपवनशोभा । अपि तु भृशतरं भोग्या भोगार्हा भवति । अमरगिरेर्मेरोः शृङ्गाणि शिखराणि नो द्रुतानि न द्रवभावं गतानि । प्रत्युत द्रुतं शीघ्रं धौतानि । कालधौतानि हिरण्मयानि ॥

ध्वान्तस्यैवान्तहेतुर्न भवति मलिनैकात्मनः पाप्मनोऽपि
प्राक्पादोपान्तभाजां जनयति न परं पङ्कजानां प्रबोधम् ।
कर्ता निःश्रेयसानामपि न तु खलु यः केवलं वासराणां
सोऽव्यादेकोद्यमेच्छाविहितबहुबृहद्विश्वकार्योऽर्यमा वः ॥ ८४ ॥

सोऽर्यमा सूर्यो वो युष्मानव्यात् । कीदृशः । एकोद्यमेच्छाविहितबहुबृहद्विश्वकार्यः । एकश्चासावुद्यमश्च तेन कृत्वा इच्छया विहितानि बहूनि बृहन्ति विश्वकार्याणि येन स तथोक्तः । केवलं ध्वान्तस्यैव तमस एव केवलस्य मलिनैकात्मनो मलीमसस्वरूपस्यान्तहेतुर्विनाशकारणं न भवति किं तु पाप्मनोऽपि एनसोऽपि । कथम् । प्राक्पूर्वम् । पादोपान्तभाजां पुनरपि यो न केवलं पङ्कजानां पद्मानां चरणाभ्यर्णवर्तिनामपि प्रबोधं तत्त्वदर्शनं योजयति । खलु निश्चयेन न केवलं वासराणां कर्ता निःश्रेयसानामपवर्गाणामपि । अपिशब्दः समुच्चये । खलु वाक्यालंकारे ॥

लोटँल्लोष्टाविचेष्टः श्रितशयनतलो निःसहीभूतदेहः
संदेही प्राणितव्ये सपदि दश दिशः प्रेक्षमाणोऽन्धकाराः ।

---

१. 'कनकाम्भोरुहा' इति पाठः.

निःश्वासायासनिष्ठः परमपरवशो जायते जीवलोकः
शोकेनेवान्यलोकानुदयकृति गते यत्र सोऽर्कोऽवताद्वः ॥ ८५ ॥

सोऽर्को वो युष्मानवतात् । यत्रान्यलोकानुदयकरे गते सति जायते जीवलोक इत्थंभूतो भवति । शोकेनेव विषादेनेव । किमवस्थः । लोटन् विवर्तमानः । लोष्टाविचेष्टो लोष्टवच्चेष्टारहितः । श्रितशयनतलः शय्यापतितः । निःसहीभूतदेहो विक्लवगात्रः । प्राणितव्ये जीवितव्ये संदेही संशयितः किं जीविष्याम्युत न जीविष्यामीति संशयानः । किं कुर्वन् । सपदि तत्क्षणं दश दिशोऽन्धकारा(निरा)लोकाः प्रेक्षमाणः पश्यन् । निःश्वासायासनिष्ठः खेदवान् । परमपरवशोऽतीव दुःस्थितः । शोकेनाप्येवं भवति ॥

क्रामँल्लोलोऽपि लोकाँस्तदुपकृतिकृतावाश्रितः स्थैर्यकोटिं
नृणां दृष्टिं विजिह्मां विदधदपि करोत्यन्तरत्यन्तभद्राम् ।
यस्तापस्यापि हेतुर्भवति नियमिनामेकनिर्वाणदायी
भूयात्स प्रागवस्थाधिकतरपरिणामोदयोऽर्कः श्रिये वः ॥ ८६ ॥

सोऽर्को युष्माकं श्रिये विभूत्यै भूयात् । प्रागवस्थाधिकतरपरिणामोदयः पूर्वदशाप्रकर्षाधिकपरिणत्युद्गतिः । कीदृशोऽसौ । यः क्रामँल्लङ्घयन् लोलोऽपि तरलोऽपि लोकाञ्जगन्ति स्थैर्यकोटिं स्थिरतापक्षमाश्रितः । क्व । तदुपकृतिकृतौ लोकोपकारविधानविषये । किं च, नृणां पुंसां दृष्टिं चक्षुर्विजिह्मां मन्दां विदधन्नपि कुर्वन्नप्यन्तःकरणानुरूपामत्यन्तभद्रां नितान्तकृतार्थां करोति विधत्ते । यस्तापस्यापि हेतुः कारणं भवति जायते । नियमिनां योगिनामेको निर्वाणदायी मुक्तिदायी ॥

व्यापन्नर्तुर्न कालो व्यभिचरति फलं नौषधीर्वृष्टिरिष्टा
नेष्टैस्तृप्यन्ति देवा नहि वहति मरुन्निर्मलाभानि भानि ।
आशाः शान्ता न भिन्दन्त्यवधिमुदधयो बिभ्रति क्ष्माभृतः क्ष्मां
यस्मिंस्त्रैलोक्यमेवं न चलति तपति स्तात्स सूर्यः श्रिये वः ॥८७॥

स सूर्योऽर्को वो भवतां श्रिये विभूत्यै स्तात् । व्यापन्नर्तुर्विनष्टर्तुः कालो वसन्तादिर्न भवति ऋतूननुवर्तते । ओषधीः कर्मतापन्नाः फलं कर्तृ न व्यभिचरति न विसंवदति । वृष्टिरिष्टा वर्षणमभिमतं भवति । इष्टैर्यागैर्देवा दिवौकसो न नहि तृप्यन्ति । अपि तु तृप्यन्ति । वहति मरुद्वाति वातः । निर्मलाभानि विमलद्युतीनि भानि नक्षत्राणि । आशा दिशः शान्ताः प्रसन्नाः । उदधयः समुद्रा मर्यादां न भिदन्ति । क्ष्माभृतः क्ष्मां बिभ्रति । यस्मिंस्तपति सति त्रैलोक्यमेवमुक्तप्रकारेण न चलति न विप्लवं याति ॥

---

१. 'चिरतरमवशो' इति पाठः. २. 'लोकाभ्युदय' इति पाठः.

कैलासे कृत्तिवासा विहरति विरहत्रासदेहोढकान्तः
श्रान्तः शेते महाहावधिजलधि विना छद्मना पद्मनाभः ।
योगोद्योगैकतानो गमयति सकलं वासरं स्वं स्वयंभू-
र्भूरित्रैलोक्यचिन्ताभृति भुवनविभौ यत्र भास्वान्स वोऽव्यात् ॥८८॥

स भास्वान्वोऽव्यात् । यत्र भास्वति भुवनविभौ लोकपाले त्रैलोक्यचिन्ताभृति ब-हुजगच्चिन्ताधरे सति ब्रह्मादीनां चिन्ता नास्ति । एतदेव दर्शयति—कृत्तिवासा महा-देवः कैलासे भूरिगिरौ (?) विहरति क्रीडते । विरहत्रासदेहोढकान्तः वियोगभयाद्देहे धृता प्रिया पार्वती येन सः । श्रान्तः खिन्नः । शेते स्वपिति । महाहौ महोरगे । अधि-जलधि पयोधौ । विना छद्मनाव्याजेन । योगस्तापादिच्छलं विना (?) । पद्मनाभो ना-रायणः । किं च, स्वयंभूर्ब्रह्मा स्वमात्मीयं वासरं दिवसं गमयति यापयति । योगोद्योगै-कतानः । योगश्चित्त[वृत्ति]निरोधस्तत्रोद्योग उद्यमस्तत्रैकतान एकाग्रः । सकलं निरवशेषम् । एते भुवनपतयो नाम[मात्रेण] स्वकार्यैकनिष्ठास्तिष्ठन्ति, अयं तु भगवा-न्कर्मणि कृतपरिकर इति दर्शितम् ॥

एतद्यन्मण्डलं खे तपति दिनकृतस्ता ऋचोऽर्चींपि यानि
द्योतन्ते तानि सामान्ययमपि पुरुषो मण्डलेऽणुर्यजूंषि ।
एवं यं वेद वेदत्रितयमयमयं वेदवेदी समग्रो
वर्गः स्वर्गापवर्गप्रकृतिरविकृतिः सोऽस्तु सूर्यः श्रिये वः ॥ ८९ ॥

स सूर्यो वो युष्माकं श्रिये स्तादस्तु । कीदृशः । स्वर्गापवर्गप्रकृतिः संसारनिर्वाण-स्वभावः कारणम् । स्वयमविकृतिर्विकाररहितः । यं सूर्यमयं वर्ग एष गणो वेदवेदी वेद-वेत्ता मण्डलार्चिः पुरुषत्वसमान(?)ज्योतिरिति शेषः । एवं वेद जानाति । कथंभूतम् । वेदत्रितयमयं त्रिवेदीप्रकृतिकम् । तथा च 'त्रयी वा एषा विद्या तपति' इति श्रुतिः । तन्मयम् । कथमेवम् । इत्थंभूतं देवं यं वेद । यदेतन्मण्डलं दिनकृत आदित्यस्य संबन्धि खे तपति ता ऋचः स ऋग्वेदः । 'ता ऋचः स ऋचां लोकः' इति श्रुतिः । यान्यर्चींषि दीप्तयो द्योतन्ते भासन्ते तानि सामानि सामवेदः । 'यदेतदर्चिर्दीप्यते तन्म-हाव्रतं तानि सामानि स साम्नां लोकः' इति श्रुतिः । अयमपि मण्डले पुरुष आत्माणुः सूक्ष्मो योगगम्यस्तानि यजूंषि स यजुर्वेदः । 'य एष एतस्मिन्मण्डले पुरुषः सोऽग्निस्तानि यजूंषि स यजुषां लोकः' इति श्रुतिः । एतेन वेदत्रितयमयत्वं कथितम् ॥

नाकौकः प्रत्यनीकक्षतिपटुमहसां वासवाग्रेसराणां
सर्वेषां साधु पाता जगदिदमदितेरात्मजत्वे समेऽपि ।

येनादित्याभिधानं निरतिशयगुणैरात्मनि न्यस्तमस्तु
स्तुत्यस्त्रैलोक्यवन्द्यैस्त्रिदशमुनिगणैः सोंऽशुमाञ्श्रेयसे वः ॥ ९० ॥

सोंऽशुमान्वो युष्माकं श्रेयसे कल्याणायास्तु । किंभूतोऽसौ । स्तुत्यो वन्द्यः । कैः । त्रिदशमुनिगणैः सुरर्षिसंघैः । किंभूतैः । त्रैलोक्यवन्द्यैस्त्रिभुवननमस्करणीयैः । येनांशुमता आदित्याभिधानमादित्यसंज्ञा आत्मनि स्वस्मिन्विषये न्यस्तमारोपिता । मध्ये वासवाग्रेसराणां शक्रप्रभृतीनाम् । देवानां प्रायेणादित्यसंज्ञा । अदितेर्देवमातुरात्मजत्वे समेऽपि सत्त्वविशेषेऽपि सति । तर्हि ते तेजस्विनो न भविष्यन्ति । किंभूतानां तेषाम् । नाकौकः प्रत्यनीकक्षतिपटुमहसां देवप्रतिपन्थिक्षयकल्पतेजसाम् । तर्हि जगन्ति विश्वानि·········साधु सम्यक्पातां रक्षतां सताम् । किं तत् । जगद्भुवनमिदम् । एतदुक्तं भवति—यद्यप्यदितेरपत्यमिति व्युत्पत्तिः सर्वेषामप्यस्ति । तन्निमित्तस्यादित्य(त्व)स्य साधारणत्वात् । तथापि भगवानेवादित्य इति लोकप्रसिद्धिः । सूर्यस्यापि हेतुर्दर्शितो निरतिशयगुणैरिति ॥

भूमिं धाम्नोऽभिवृष्ट्या जगति जलमयीं पावनीं संस्मृताव-
प्याग्नेयीं दाहशक्त्या मुहुरपि यजमानां यथाप्रार्थितार्थैः ।
लीनामाकाश एवामृतकरघटितां ध्वान्तपक्षस्य पर्व-
ण्येवं सूर्योऽष्टभेदां भव इव भवतः पातु बिभ्रत्स्वमूर्तिम् ॥ ९१ ॥

सूर्योऽर्को भवतो युष्मान्रक्षतु । किं कुर्वन् । बिभ्रद्दधत् । काम् । स्वमूर्तिम् । अष्टभेदामष्टप्रकाराम् । क इव । भव इव भगवान्महेश्वरो यथा । 'क्षितिजलपवनहुताशनयजमानाकाशसोमसूर्याख्याः' अष्टमूर्तयः । सूर्ये ता दर्शयितुमाह—किंभूतः । भूमिं निधानम् । कस्य । धाम्नस्तेजसः । किं च, जलमयीं जलप्रायाम् । अभिवृष्ट्याभिवर्षणेन । जगति लोके । किं च, पावनीं वायुमयीम् । (जनानां भक्तानाम्) । तथाग्नेयीमग्निमयीम् । दाहशक्त्या दाहसामर्थ्येन । मुहुः पुनःपुनर्यजमानां याजकमयीम् । यथाप्रार्थितार्थैः । तथाकाशे लीनां संबद्धाम् । अमृतकरघटितां चन्द्रेण संगताम् । क्व । ध्वान्तपक्षस्य पर्वण्यमावास्यायाम् । तत्र हि सूर्याचन्द्रमसौ संगच्छेते । एवमुक्तया नीत्या सूर्यः स्वयमेवाष्टमूर्तिः श्रीमहादेवतुल्य इति ॥

प्राक्कालोन्निद्रपद्माकरपरिमलनाविर्भवत्पादशोभो
भक्त्या त्यक्तोरुखेदोद्गति दिवि विनतासूनुना नीयमानः ।

१. 'गुणैनात्मनि' इति पाठः. २. 'धाम्नोऽथ' इति पाठः. ३. 'यजमानात्मिकां प्रार्थितार्थैः' इति पाठः. प्रार्थितार्था याचकास्तैर्ज्ञापकभूतैर्यजमानात्मिकामिति तदर्थः. ४. 'तथा संस्मृतौ स्मरणेऽपि कृते सति पावनीं शुद्धिकरीम् । एतेन पवनस्य वायोरिमां पावनीमिति श्लेषमहिम्ना वायुस्वरूपिणीमिति सूचितम्' इति शास्त्रिव्याख्यानम्.

सप्ताश्वाप्तापरान्तान्यधिकमधरयन्यो जगन्ति स्तुतोऽलं
देवैर्देवः स पायादपर इव मुरारातिरह्नां पतिर्वः ॥ ९२ ॥

अह्नां पतिरादित्यो वो युष्मान्पायात् । योऽपर इव मुरारातिर्द्वितीय इव मुरारिः । कीदृशो मुरारातिः कीदृशश्चाह्नां पतिस्तदुच्यते—मुरारिपक्षे प्राक्काले पूर्वकाले उन्निद्रा जागरिता सावधाना पद्मा श्रीस्तस्याः करौ हस्तौ ताभ्यां परिमलनं हस्तसंवाहनं तेनाविर्भवन्ती प्रादुर्भवन्ती पादयोः शोभा कान्तिर्यस्य मुरारेः स तथोक्तः। कीदृशोऽहर्पतिः । प्राक्काले पूर्वाह्णे उन्निद्रा विकसिता ये पद्माकरास्तेषां परिमलनमवगाहनं तेनाविर्भवन्ती पादानां किरणानां शोभा यस्य सः । किं च, विनतासूनुनारुणेन नीयमान उह्यमानः । क्व । दिवि गगने । भक्त्या भावेन । त्यक्तोरुखेदोद्गति त्यक्त(बृहत्)जङ्घाखेदोदयं यथा भवति । किं कुर्वन्स्तुतः । अधरयँल्लङ्घयन् । जगन्ति भुवनानि । मुरारिपक्षे तु जगन्ति कति । सप्त । आशु शीघ्रम् । आप्तापरान्तानि प्राप्तपरपाराणि । रविपक्षे तु—सप्ताश्वाप्तापरान्तानि सप्तभिरश्वैराप्तापरान्तानि आश्रितपश्चिमाशापर्यन्तानि ॥

यः स्रष्टापां पुरस्तादचलवरसमभ्युन्नतेर्हेतुरेको
लोकानां यस्त्रयाणां स्थित उपरि परं दुर्विलङ्घ्येन धाम्ना ।
सद्यः सिद्ध्यै प्रसन्नद्युतिशुभचतुराशामुखः स्ताद्विभक्तो
द्वेधा वेधा इवाविष्कृतकमलरुचिः सोऽर्चिषामाकरो वः ॥ ९३ ॥

सोऽर्चिषामाकरो निधानं खनिर्वा सूर्यः सिद्ध्यै सिद्ध्यर्थं वो युष्माकं स्ताद्भूयात् । सद्यः सपदि । क इव । वेधा इव ब्रह्मेव । किंविशिष्टः । विभक्तः । कथम् । द्वेधा । कीदृशश्च सूर्यः कीदृशो ब्रह्मा तदेव दर्श्यते—योऽपां पयसां पुरस्तात्पूर्वं स्रष्टा विधाता कर्ता । वेधा हि पूर्वं पयः सृजतीत्यागमविदः । सूर्योऽपि प्रागपां स्रष्टा भवति । 'आदित्याज्जायते वृष्टिः' इति । अचलवरसमभ्युन्नतेर्हेतुरेक इति । अचलवराः कुलशैलास्तेषां समभ्युन्नतिरुच्छ्रायस्तस्य हेतुः कारणम् । एकोऽद्वितीयः । रविपक्षे तु पुरस्तात्पूर्वस्यां दिशि अचलवरो मेरुः (उदयाद्रिः) तत्र समभ्युन्नतिरुदयस्तस्य हेतुरेकः । मेरुर्हि भगवतोदयता गौरवं नीयते उदयाचल इति । यस्त्रयाणां लोकानां भूर्भुवःस्वर्लक्षणानामुपर्युपरिष्टात्स्थितः । सूर्योऽपि त्रिलोक्या उपरि वर्तते । धाम्ना तेजसा । दुर्विलङ्घ्येनानभिभवनीयेन । वेधा तु धाम्ना स्थानेन दुर्विलङ्घ्येन दुष्प्रापेणोपरिस्थितः । परमतीव । तथा प्रसन्नद्युतीनि शुभानि

---

१. 'त्यक्ता उरुर्महती खेदस्य परिश्रमस्योद्गतिरुद्गमो यत्र कर्मणि यथा स्यात्तथा । यद्वा रथमारुह्याश्वानां नियन्त्रणादनूरुत्वाद्वा त्यक्तो विरहः ऊर्वोर्जङ्घयोः खेदः परिश्रमो यस्यां सा तथाविधा उद्गतिरूर्ध्वगमनं यस्मिन्नयने तत्त्यक्तोरुखेदोद्गति यथा स्यात्तथा दिवि अन्तरिक्षमार्गे नीयमानः । मुरारातिरपि विनतासूनुना गरुडेन——दिवि सुरलोके नीयमान उह्यमानः' इति शास्त्रिव्याख्यानम्. २. 'शुचि' इति पाठः.

शोभमानानि चत्वार्याशामुखानि दिग्वदनानि यत्रोदिते सति स तथोक्तः । अन्यत्र चतस्र आशा इव महत्वान्मुखान्याननानि यस्य स तथाभूतः ॥

सादिर्द्यूर्वीनदीशा दिशति दश दिशो दर्शयन्प्राक्दशो यः
सादृश्यं दृश्यते नो सदशशतदशि त्रैदशे यस्य देशे ।
दीप्तांशुर्वः स दिश्यादशिवयुगदशादर्शितद्वादशात्मा
शंशास्त्यश्वांश्च यस्याशयविदतिशयाद्दन्दशूकाशनाद्यः ॥ ९४ ॥

दीप्तांशुः सूर्यो वो युष्मभ्यं शं सुखं दिश्याद्यच्छतु । यस्याश्वाञ्शास्ति नियमयति । कः । दन्दशूकाशनाद्यः । दन्दशूकाः सर्पास्तदशनो गरुडस्तस्याद्यो ज्येष्ठः प्रथमोऽरुणः । आशयविदभिप्रायज्ञः । अतिशयाद्विशेषतः । कीदृशो दीप्तांशुः । अशिवयुगदशादर्शितद्वादशात्मा अशिवयुगं क्षयसमयस्तत्र दशा तया दर्शिता द्वादशात्मानो येन सः । यो दृशो दिशति चक्षूंषि ददाति । दशदिशो दर्शयन्दशाशाः प्रकाशयन् । किंभूताः । सादिर्द्यूर्वीनदीशाः । अद्रयः पर्वताः द्यौर्नभः उर्वी पृथ्वी नदीशाः समुद्राः । अद्रयश्चेति संबन्धः । तैः सह वर्तन्त इति ताः तुल्ययोग इति पुनर्बहुव्रीहिः । प्राक् प्राचीम् । किं च, यस्य सादृश्यं नो दृश्यते तुल्यत्वं नोपलभ्यते । त्रैदशे देशे देवानां स्थाने स्वर्गे । सह दशशतदृशा शक्रेण वर्तत इति [तस्मिन्] देशे ॥

तीर्थानि व्यर्थकानि ह्रदनदसरसीनिर्झराम्भोजिनीनां
नोदन्वन्तो नुदन्ति प्रतिभयमशुभं श्वभ्रपातानुबन्धि ।
आपो नाकापगाया अपि कलुषमुषो मज्जतां नैव यत्र
त्रातुं यातेऽन्यलोकान्स दिशतु दिवसस्यैकहेतुर्हितं वः ॥ ९५ ॥

स दिवसस्यैकहेतुर्दिनस्य प्रधानकारणं भानुर्वो युष्मभ्यं दिशतु यच्छतु । किं तत् । हितं पथ्यम् । यत्रान्यलोकानपरजगन्ति त्रातुं पातुं याते गते सति तीर्थानि पुण्यस्थानानि व्यर्थकानि जायन्ते । आकिंचित्करत्वात् । भास्वत्युदिते सति फलं दातुं समर्थानि तत्सेवकानाम् । न तद्विरहे । कासां संबन्धितीर्थानि । ह्रदनदसरसीनिर्झराम्भोजिनीनाम् । ह्रदा अगाधा जलाशयाः । नदाः शोणादयः । सरस्यो महासरांसि । निर्झराः प्रस्रवाः । अम्भोजिन्यः पुष्करिण्यः । ह्रदाश्च नदाश्चेति समासः । अपि च, उदन्वन्तः समुद्रा न प्रतिभयं नुदन्ति न पापमपनयन्ति । प्रतिशब्देनात्र पापं विवक्षितम् । अशुभश्वभ्रपातानुबन्धि । अशुभश्वभ्रं नरकः । श्वभ्रमिव सः । अधोगतिहेतुत्वात् । तत्र पातस्तदनुभवकारणम् । नाकापगाया अप्यापो जलानि कलुषमुषो नैव पापापहा न । एतानि सर्वाणि तीर्थानि भानुमताधिष्ठितानि स्वकार्यक्षमाणि भवन्तीति वाक्यार्थः । केषाम् । मज्जतां स्नानं कुर्वताम् ॥

१. 'द्राक्' इति पाठः. २. 'स्वर्गापगायाः' इति पाठः. ३. 'लोकं' इति पाठः.

एतत्पातालपङ्कप्लुतमिव तमसैवैकमुद्गाढमासी-
दप्रज्ञाताप्रतर्क्यं निरवगति तथालक्षणं सुप्तमन्तः ।
यादृक्सृष्टेः पुरस्तान्निशि निशि सकलं जायते तादृगेव
त्रैलोक्यं यद्वियोगादवतु रविरसौ सर्गतुल्योदयो वः ॥ ९६ ॥

असौ रविर्भास्वान्वोऽवतु । किंभूतः । सर्गतुल्योदयः सृष्टिसमानोदयः । यद्वियोगाद्य-द्विरहादेतत्त्रैलोक्यमिदं त्रिभुवनं निशि निशि रात्रौ रात्रौ तादृगेव जायते यादृशं सृष्टेः पुरस्तात्पूर्वमासीदस्ति स्म । किंभूतम् । पातालपङ्कप्लुतमिव । पातालमधः पङ्कः कर्दम-स्तत्र प्लुतं मग्नमिव । केन । तमसा । एकमद्वितीयम् । उद्गाढं प्रबलम् । अप्रज्ञाताप्रत-र्क्यम् । न प्रज्ञायते स्माप्रज्ञातो बोद्धव्यप्रतीत्यविषयः । अप्रतर्क्यस्तर्कयितुमशक्यः । अप्रज्ञातं चाप्रतर्क्यं च तदेवंविधम् । सुप्तमन्तस्ततश्च निरवगति प्रत्यक्षस्याविषयम् । तथा अलक्षणं लक्षणस्याविषयम् । सांप्रतमप्येवंभूतमेव भवति ॥

द्वीपे योऽस्ताचलोऽस्मिन्भवति खलु स एवापरत्रोदयाद्रि-
र्या यामिन्युज्ज्वलेन्दुद्युतिरिह दिवसोऽन्यत्र तीव्रातपः सः ।
यद्वश्यौ देशकालाविति नियमयतो नो तु[1] यं देशकाला-
वव्यात्स स्वप्रभुत्वाहितभुवनहितो हेतुरह्नामिनो वः ॥ ९७ ॥

सोऽह्नां दिनानां हेतुः कारणमिनोऽर्को वोऽव्यात् । कीदृशोऽसौ । स्वप्रभुत्वाहितभु-वनहितः । स्वं च तत्प्रभुत्वं च तेनाहितं कृतं भुवनहितं लोकपथ्यं येन स तथोक्तः । नो तु पुनर्यमिनं देशकालौ नियमयतः इनस्य नियामकौ न भवतः । कथंभूतौ । यद्वश्यौ यद-धीनौ । देशकालौ प्रदेशसमयौ । देशः पूर्वादिदिग्विशेषः । कालः समयः प्रभातादिः । अस्मिन्द्वीपे योऽस्ताचलोऽस्तपर्वतः स खल्वपरत्र द्वीपान्तरे उदयाद्रिरुदयाचलः । अ-न्यत् । इह देशे या निर्मलचन्द्रकान्ती रात्रिः सोऽन्यत्र दुःसहातपो दिवसः । यदा किल सहस्रकिरणो भगवान्मेरोर्दक्षिणस्यामुदेति तदा मेरोरुत्तरस्यामस्तमेति । मेरोः पूर्वस्यां मध्यदिनं पश्चिमायां मध्यरात्रं च । अतो हेतोः पूर्वादिदेशः पूर्वादिसंध्याकालः एतौ यस्य रवेर्वश्यौ भवतः न तु रविरेतयोर्देशकालयोर्वश्यः । एतेन सूर्यचक्रभ्रमात् पृथ-क्पृथग्देशकालनिर्माणं गणितशास्त्रे प्रसिद्धमस्तीति भावः ॥

व्यग्रैरग्र्यग्रहेन्दुग्रसनगुरु[2] भरैर्नो समग्रैरुदग्रैः
प्रत्यग्रैरीषदुग्रैरुदयगिरिगतो गोगणैर्गौरयन्गाम् ।
उद्गाढार्चिर्विलीनामरनगरनगग्रावगर्भामिवाह्ना-
मग्रे श्रेयो विधत्ते ग्लपयतु गहनं स ग्रहग्रामणीर्वः ॥ ९८ ॥

---

१. 'नु' इति पाठः. २. 'गुरुतरैः' इति पाठः.

